(प्रविशन्)

सलीम्—महाराज, तात, गुरो ! अयमस्मि प्राप्तः ।

अक.—वत्स, एहि । मदाहमूनत्रिंशद्वर्ष आसं, पुत्रसन्तानसमुत्सुकः, तदानीं साधोः सलीं सिक्रेः प्रसादात् त्वां प्रापम् । त्वत्प्रसूतेरनन्तरं क्वाजा मोहियुद्दीन् चिस्तेर्मन्दिरं आजमीरस्थं प्रति पदैव मत्कार्तज्ञ्यसमर्पणार्थमगाम् । सिक्रेर्नाम्नाङ्कितमेव प्रासादमेतमत्र व्यरचयम् । अतो नूतना राजधान्येवैषा 'फ़तेपूर् सिक्रि' नाम्नी त्वया सह निबिडं संबन्धं बिभर्ति । साधोः प्रसादाद् मदीयहिन्दुभार्यायां योधपुरराजकुमार्यां जनितस्त्वम् । सर्वथा राज्यव्यवहारे, अध्यात्मविषये च मम पूर्णः प्रतिनिधिर्भूत्वा वर्धस्व विजयस्व च ।

सलीम्—ननु उभयथापि मे गुरुर्भवान् । यथा भवान् तथा अहमपि विशालेऽस्मिन् भारते यदा यदा सञ्चरामि तदा तदा तत्रत्यानां हिन्दुसन्न्यासिनां दर्शनं तैः संवादं च करोम्येव । मम एकादशे वर्षे यदा वङ्गेषु कमलापुरमगाम्, तदा शिवरात्रिसमये मया रात्रौ योगिनो दृष्टाः । अन्यदा मम मणिबन्धे रक्षाबन्धनमपि केनापि साधुना कृतम् । उपरागवेलायां तुलाभारे भवद्भिस्सह अहमप्युपवेशितः । भवद्वचःपरिपालनं हित्वा कथमन्यथा भवतो मदाधमर्ण्यं समर्थयिष्यामि ? 'शिष्यस्तेऽहं शाधि मां त्वां प्रपन्नम्' ।

अक.—अबुल् फ़ैसल् ! बीरवर ! पश्यत भविष्यद्भारतचक्रवर्तिनः समीचीनां विनयसंपदम् । वत्स ! मयाधुना प्रतिष्ठाप्यमानायाः दैवसभायाः 'दिन्-इलाहि' अथवा "तौहीद्-इलाहि" इति नाम ।

अ.फ़ै.—सूफ़ी-सिद्धान्ते 'तौहीद्' एव परमं तत्त्वम् । 'अनल् हक्' "अहं स" इति जीवात्म-परमात्मनोर् ऐक्यमेव तौहीद् इत्यस्यार्थः ।

सचिव.—युष्मत्सूफ़ी-सिद्धान्तो नास्माकमौपनिषदसिद्धान्ताद् दवीमान्। उद्घोषयन्ति हि वेदान्ता अमुमेव "अहं स" इति तत्त्वं, "तत्त्वमसि" "अहं ब्रह्मास्मि" इत्यादिमहावाक्यैः। एतदनुसन्धानमेव प्राणायाम-पुरस्सरं 'हंसविद्या' 'अजपा' इति प्रथते योगरहस्य-विदां गोष्ठीषु।

सलीम्—महाराज! यदाहं भवदाज्ञया मालवादिप्रदेशं गतः, तदा उज्जयिन्यां 'जगद्रूप' इति ख्यातं हिन्दुपरिव्राजक-मद्राक्षम्। तेन सह मया संवादे सम्यक् संबुद्धं सूफ़ी-यानस्य अद्वैतवेदान्तस्य च नास्ति भेद इति।

अक.—साधु वत्स! एष निराकारनिर्गुणवादो हिन्दूनां सर्वथा अस्मान् वशीकरोति। किन्तु सगुणमार्गे तदेव ब्रह्म राम-कृष्णादिनामरूपधृत् दुःखादि अनुभवतीति यत् तेषां ग्रन्थेषु दृश्यते, न तत्र नो मनः सन्तुष्यति। वयं हिन्दु-पक्षपातिन इति मुसल्मानाः बदौनीप्रभृतयो अपवदन्ति। सर्वत्र युक्तिमन्मतं स्वीकुर्मः, नान्यत्। गुणोपसंहार-न्यायेन समन्वयदृष्ट्या च व्यवहरन्तः, यत्र यत्र सारभूतमंशं पश्यामः तत्र तत्र अभिनिविशामहे, न तु कुत्रचित् अन्ध-परंपराप्रवाहेन वा, श्रद्धाजाड्येन वा, आग्रहेण वा।

सर्वं परीक्ष्यैव अभ्युपगच्छामः। यदाहमूनषोडशवर्षो बाल आसं, तदैव मे लौकिकप्रवृत्तिषु विरक्तिस्समजायत। यदाहं विंशवर्षीयो युवा आसं तदेव इयमाध्यात्मिकी कापि आन्तरी व्यथा मे उदपद्यत। तीव्रोऽयं हृदयोद्वेगो वर्धमान एवासीत्। प्रतिदिनं चतुर्वारं प्रार्थनामकरवम्। दीर्घे ध्याने न्यमज्जम्। एकवारमेव भुक्तिः, होरात्रयमेव सुप्तिश्चासीन्मे। यद्यपि बृहत् राष्ट्रं, महती राज्यनिर्वाह-सामग्री च मद्धस्ते वर्तते, तथापि भगवत्संकल्पानुविधान-सन्तोषस्य नैतत्सर्वं षोडशीमपि कलामर्हतीति दृढः प्रत्ययो मयि प्ररूढः, यद्वशात् बाह्यदृष्ट्या यद्यप्यहं चक्रवर्ति-

वेषभूषाभाषादिभिर्व्यवहरन्नस्मि, तथापि अन्तर्मे हृदयं पारमार्थिकतत्त्वगवेषणे, तदुपकारकाणां साधूनामाचार्याणां गवेषणे च सदैव व्यग्रमास्ते। सर्वस्मिन्नपि देशे, सर्वेष्वपि जनेषु मतेषु च सारः सादरं मृगयमाणानां दृष्टेः स्फुरति। निर्विण्णोऽस्मि च शीया-सुन्नी-विवादैः परमतप्रद्वेष-तदाराधनादिविनाशकव्यवसायैश्च। अत एव सूफ़ी-सिद्धैः, हिन्दुसन्न्यासिभिः, जैनसूरिभिरन्यैराचार्यैश्च विचारे मनः प्रावर्त्तयम्।

(प्रविश्य)

राजपुरुषः—(प्रणम्य) महाराज! गूर्जरे नवसारिस्थानात् इरानीयानामाचार्याः 'दस्तूर् महयर्जि राणा' नामान आगताः।

अक.—वीरवर, स्वयं गत्वा आचार्यानेतानस्मत्सन्निधिमानय।

वीर.—तथा।

(गत्वा तेन सह प्रविशति।)

दस्तूर्—महाराज! विविधमतविचारकतकेन मनःपङ्कं विशोधयितुकामो भवानिति विदित्वा सुतरां प्रीताः स्मः। प्रथमं तावदस्मदनुग्रहचिह्नभूतम् "अव्यङ्गं" नाम सूत्रमेतत् महाराजस्य कटीप्रदेशं निरन्तरमलङ्करोतु।

(महाराजस्य वलग्ने अव्यङ्गं बध्नाति।)

अक.—कतिपयवर्षेभ्यः पूर्वं सूर्यपुरप्रदेशे युद्धार्थमागतैरस्माभिः भवद्भिस्सह ज़रतुष्ट्र-सिद्धान्ताश्चर्चिताः। कैचन विषया नाद्यापि सम्यगवगताः, न वा नो मनीषातोषकराः। तथा हि—एकस्मादेव दयामयाद् भगवतः सद् असच्च, पुण्यं पापं चेत्युभयमपि कथं संभवितुमर्हति? तथापि

भवदुपदेशादत्र प्रासादे तत्तदनुष्ठानं क्रियत एव। अस्मद्हिन्दुभार्याप्रासादे हिन्दुस्नुषाप्रासादे च निरन्तरमग्नेरुपासना विधीयते। अग्नौ होमा वैदिकानां भवताम् इरानीयानां च समानाः। तत्र तत्र अग्निमन्दिराणि स्थापितानि, यानि अबुल् फ़ैसल्-मन्त्रिणा पर्यवेक्ष्यन्ते।

दस्तूर्—एवं मित्रस्यापि उपासना महाफलप्रदा।

सच्चि.—अग्नेः सूर्यस्य च उपासना वैदिकानां मुख्या। 'सूर्य आत्मा जगतस्तस्थुषश्च' इत्याह श्रुतिः। द्विजैस्सर्वैरुपास्यमाना गायत्र्यपि सवितृदेवताको मन्त्रः।

अक.—वीरवरोऽपि मामेवमेवाह मुहुर्मुहुः, 'नभोमध्यं गते भगवति सवितरि तमवलोक्य आराधय विशिष्य भानुवासरे। प्राचीमुखो भव, यत्र सूर्य उदेति, किमर्थं पश्चान्मुखीभवसि' इति।

भानु.—सूर्योपस्थानं सर्वेषामेव संप्रतिपन्नम्। सूर्यसहस्रनामस्तोत्रमहमेव विलिख्य समर्पयिष्यामि, उपदेक्ष्यामि च महाराजाय।

अक.—अवश्यमुपस्थास्ये भगवन्तं भास्करम्। कोरान्ग्रन्थेऽपि सूर्यो महीयते। पाश्चात्यदेशेषु क्रिस्तोः पूर्वं मित्राराधनमेव सर्वत्र प्रसृतमासीत्। क्रिस्तुनापि मित्रोपासना कृता, अन्ते मित्रेणैव ऐक्यमपि तेन प्राप्तमित्यपि श्रूयते।

अ.फ़ै.—महाराज! एतेन स्मारितोऽस्मि यच्चिराद् भवद्भिः केचन क्रैस्तवा आहूय प्रष्टव्या इति अभिलषितम्। प्रायो बहवस्तेषु सूक्ष्मान् सिद्धान्तांशान् ज्ञातुं चर्चयितुं च न पारयन्ति।

अक.—मृग्यतां यदि गोमन्तकप्रदेशे केचन तेषु विज्ञाः स्युरिति।

अ.क्रै.—तत्रैव प्रेषिता दूता मासतः पूर्वम्, नाद्यापि प्रतिनिवृत्ताः।

(प्रविश्य)

राजपुरुषः—(प्रणम्य) महाराज, गोमन्तकप्रदेशात् 'पाद्रे रोडाल्फो अक्वाविवा' नामानः क्रैस्तवगुरवस्समागताः।

अक.—शीघ्रं प्रवेशयैतान्।

(गत्वा तैः सह प्रविश्य)

रा.पु.—भोः, एषोऽत्र मोगल्सम्राट्, उपसर्पन्तु भवन्तः।

(उपसृत्य चक्रवर्तिनं प्रणम्य)

क्रैस्तवगुरवः पाद्रे रो. अ.—महाराज! भवद्भिः इस्लाम्-मार्गः परिहृतः, क्रिस्तुमार्गे च अभिरुचिर्भवतां जाता इति श्रुत्वा महान् प्रमोदोऽस्माकम्। भवतः क्रैस्तवीकर्तुं सज्जाः प्राप्ताः स्मः। किन्तु एक एव तत्र प्रतिबन्धकोंऽशः। महाराजस्य मनःक्लेशः कोपो वा यदि नोद्भवेत् तदा तं कथयिष्यामः।

अक.—स्वैरं कथ्यताम्। क्लेशकोपादिभ्यस्सुदूरायां भूमौ अद्य वर्तामहे।

पाद्रे—पर्यायेण पूर्वां परित्यज्य नूतना पत्नी स्वीकार्या। एकैकशो बहुपत्नीकत्वमस्माकं न अनभिमतं, किं तु समकालमेव संभूय बह्व्यः पत्न्यो नोढव्याः।

अक.—(मन्दं हसन्) क्रैस्तवमतस्य अयमेव सारः! मुख्योद्देश्यं च क्रैस्तवीकरणमन्येषाम्। साधु, साधु। नास्माकमस्ति एतादृशमौत्सुक्यं किमपि। क्रिस्तुसिद्धान्ते काश्चन मौलिकान् प्रश्नान् प्रष्टुं समाधानं प्राप्तुं च भवन्त आकारिताः।

(प्रविश्य)

राजपुरुषः—महाराज ! उपस्थितः कश्चन यूथः। स च स्वयमेव मया सह स्वैरं राजानुज्ञामप्रतिपालयन्नेव प्रविष्टः।

अक.—को दोषः? इत एतु स यूथ-राबी। सोऽपि एतान् क्रैस्तवान् प्रति प्रश्नान् शृणोतु।

यूथः—श्रोष्यामि। मन्ये, महाराजेन नैतद्विस्मृतं यद् वयमेव क्रैस्तवापेक्षया ज्येष्ठाः, श्रेष्ठाश्च। प्रथमं तावत् क्रिस्तोः कानीनजन्माद्भुतं नास्माभिरभ्युपगम्यते। न च नः संमतमिदं यद् येशुक्रिस्तुः देवदूत इति।

(इति यूथे वदत्येव बैबिल्-पुस्तकं क्रिस्तुचित्रं च महाराजाय ददाति क्रैस्तवपाद्रे। उभयमपि मुखेन परिचुम्ब्य स्वीकरोति महाराजः।)

अक.—(अबुल् फ़ेसल्-हस्ते बैबिल्-पुस्तकं दत्वा) फ़ेसल्, भवता अयं क्रैस्तवानां दिव्यो ग्रन्थः पारसीकभाषया अनूदितव्यः। तद् गृहाणैतत्। किं च यद्येतैरिष्यते, तदा एतैः स्वप्रार्थनामन्दिराणि निर्विघ्नं विरच्यन्ताम्।

पाद्रे—(सानन्दम्) सत्यं महाराजः क्रैस्तवपक्षपाती, अथवा क्रैस्तव एवायम्!

अक.—क्रिस्तोर्दिव्ये जन्मनि मुसलिमे नो विचिकित्सा अस्ति। किं च यदि क्रिस्तुर्दिव्य आविर्भावः स कथं स्वस्तिके स्तम्भे आणिभिर्घटितोऽपि स्वशक्त्या स्वात्मानमुन्मुच्य बहिर्निर्गत इति बहु नः क्रिस्तुविषये प्रष्टव्यमस्ति। एतान् प्रश्नान्, एवं च मतान्तरेषु संभवन्ति प्रश्नान्तराणि च परिशीलयितुं सभा एषा मया उपक्रान्ता। तदत्र कमपि कालं स्थीयताम्, अनुशिष्यतां च तदा तदा अस्माकं कुमारः।

अ. फ़े.—महाराज ! मन्येऽद्य मिलिता एव बहवो नानासंप्रदायानुसारिणः। तद् भवद्भिरुत्प्रेक्षिता अध्यात्मसभा प्रस्तोतव्या।

अक.—तथैव करिष्यामः। प्रथमं मामारभ्य कुमारसलीं-पर्यन्तम् अस्यां विंशतिर्दीक्षिता भवेयुः। एषु भवान्, भवद्भ्राता अबुल् फ़ैसि, बीरवरः, अब्दुर् रहीं खानखानश्च अन्तर्भूताः। अस्मिन् 'इबदत्-खाना'-मण्डपे मध्ये उन्नतायां वितर्दिकायां वयं कुमारस्सलीं च उपविशामः। उपविष्टयोरावयोः कोणचतुष्टयेभ्यः भवान्, भवद्भ्राता, रहीम्, बीरवरश्च प्रथममागत्य अस्मत्पार्श्वचतुष्टयेऽपि भवेयुः। तदनन्तरमन्ये। आहृत्य चत्वारिंशदेवात्र पारिषदाः 'अब्दला'ख्याः स्युः, नाधिकाः। प्रथमं मण्डपे मध्ये चतुर्षु कोणेषु च प्रदीपोद्दीपनं कर्तव्यम्। तदानीं सर्वैस्तिष्ठद्भिः दीपगतं ज्योतिर्वन्दनीयम्।

(समनन्तरमेव केचन राजपुरुषाः प्रविश्य प्रदीपोद्दीपनं कृत्वा, तत्र तत्र पुष्पाणि गन्धद्रव्यान्तराणि च न्यस्यन्ति। सर्वे यथोद्दिष्टं कुर्वन्ति।)

अक.—सर्वेषामेव चिह्नभूत उष्णीषः प्रदास्यते। तस्य मुखभागे 'हू' इति भगवद्बीजाक्षराङ्किता स्वस्तिकाकृत्या वा वक्राकृत्या वा कापि लोहमयी मुद्रा स्यात्। एकैकस्य सन्दर्शनसमये "सलामलैकुम्" इति वन्दनवचो विहाय "अल्ला हो अकबर्" इति वक्तव्यम्। दीक्षितानां सर्वेषां "शिष्या" इति संज्ञा।

अ. फ़े.—सर्वमेतत्सज्जीकृतं वर्तते। तद्दीक्षां ददातु महाराजः। यथानिर्दिष्टमाचरामः।

(इति निर्दिष्टप्रकारेण अकबरः, सलीं च मध्ये वेदिकामारोहतः। निर्दिष्टाश्चत्वारः कोणचतुष्टयं गत्वा प्रत्या-

गत्य महाराजस्य पुरतो जानुभ्यामुपविश्य तद्धस्ताभ्यां स्वशिरसि निवेशितमुष्णीषं गृहीत्वा उत्तिष्ठन्ति ।)

अक.—संवादः कर्तव्यः, वादः परिहर्तव्यः; स यद्यनिवार्यः, मृदुना वचसा कार्यः। आचारे च सामरस्यवासनासमृद्ध्यै हिन्दूनां दीपावल्यादिः, इरानीयानां नूतनवर्षदिवसः नवरोजाख्यः, क्रैस्तवानां मार्गशीर्षमासे क्रिस्तुमसाख्यः, इत्येते तत्तन्मतीया उत्सवास्सर्वैरेव अनुष्ठेयाः।

अ. फ़े.—यदाज्ञापयति देवः। यथा भवन्तः तथा प्राचीनभारते अशोकनामा सार्वभौमो बभूव। तेनैवं राज्यमधितस्थुषैव धर्मप्रचारः कृतः। तेन निसृष्टा या सूक्तिः 'समवाय एव साधुः' इति सा मेऽद्य स्मृतिपथमागच्छति।

अक.—श्रुतं भवन्मुखादेव अशोकस्य उदार इतिहासः। दश शासनानि पर्वतशिखराद् उदीर्णानि बैबिलपुस्तकात् श्रूयन्ते। मया च दश शासनानि दृष्टानि। तानीमानि अबुल् फ़ेसल्-मुखेन भवतां पुरतः प्रकाश्यन्ते। अवधत्त। फ़ेसल्!

अ. फ़े.—प्रथमं शासनम् - उदारता, दानशीलता च।

द्वितीयम् - अपकारिषु क्षमा, कोपस्य मार्दवेन प्रतिक्रिया।

तृतीयम् - प्रापञ्चिकेभ्योऽभिलाषेभ्यो निवृत्तिः।

चतुर्थम् - प्रापञ्चिकजीवनबन्धेभ्यो मुक्तिः, तथा हिंसातः। पारलिकजीवनहेतोश्च तत्तत्संपादनाच्च विरतिः।

पञ्चमम् - प्रज्ञा, भक्तिः, कर्मणां फलं प्रति अनुध्यानं च।

षष्ठम् - सिद्धीनामद्भुतानां च विषये जागरः, अप्रमादश्च।

सप्तमम् - मसृणा वाक्, मृदूनि वचांसि, सर्वप्रियकराणि भाषणानि।

अष्टमम् - सौभ्रात्रं, स्वार्थापेक्षया परार्थानां प्राथम्यम् ।

नवमम् - प्रापञ्चिकवस्तुभ्यो निवृत्तिः, परमेश्वरं प्रति च प्रवृत्तिः ।

दशमम् - ईश्वरे आत्मोपकारिणि भक्तिपूर्वमैक्यम् ।

अक—साधु। त्वमेव सर्वेषामेतेषां शासनसूत्राणां प्राचीनैः कोरानस्थैर्वाक्यलिङ्गैरन्यैरुपष्टम्भकैर्वाक्यैश्च उपबृंहणं विधेहि ।

अ. फ़े.—तथा ।

सच्चि.—महाराज ! 'नाविष्णुः पृथिवीपतिः' इति अस्माकं स्मृतय आहुः । तत्सत्यमेव भवान् भगवदंशः ।

अ. फ़े.—अस्माकं लौकिकेषु तथा पारमार्थिकेष्वपि विषयेषु महाराजो गुरुः, नेता च । महाराज ! स्वीयं सत्त्वं, तेजः, दिव्योऽनुभावश्च सर्वेभ्यस्सानुग्रहं देयः ।

(एकैकशः सर्वे सतीर्थं पात्रं महाराजहस्तयोर्ददति । महाराजः हस्ताभ्यामादाय स्वश्वासानिलं तीर्थोपरि आध्माय, निमीलिताक्षि ध्यात्वा तीर्थपात्रं तत्तद्धस्ते प्रत्यर्पयति । ते च विनीतशिरस्काः स्वं स्वं पात्रं स्वीकुर्वन्ति । एतत्सर्वं वीक्ष्य मुखविकारैर्बहुभिः तत्रत्या मुसल्मानाः परस्परम् अवलोकयन्ति ।)

अक.—सभाया अस्याः प्रथमामिमां गोष्ठीं शोभनैः अस्मत्सिद्धान्तव्याख्याभूतैः, परतत्त्वविषयकैः श्लोकैः, परिसमापयितुमिच्छामि । प्रथमं खानखानः पण्डितो भक्तः कविः श्लोकमुदीरयिष्यति, तदनन्तरमहमेव ।

अब्दुर् रहिम् खानखान :—

'रूपं रूपविवर्जितस्य भवतो ध्यानेन यद्वर्णितं
स्तुत्याऽनिर्वचनीयताखिलगुरोर्दूरीकृता यन्मया ।

व्यापित्वं च विनाशितं भगवतो यत्तीर्थयात्रादिना
क्षन्तव्यं जगदीश तद्विफलतादोषत्रयं मत्कृतम् ॥'

अक.—

यो ब्रह्मा च हरो हरिश्च सविता ब्रह्मागुणं वेदिनां
बुद्धोऽर्हन्नसुरो महान् जिनयुगावस्तागमोपासिनाम् ।
यूथ-क्रैस्त-मुहम्मदीयमतिनां येह्वे जिहोवा च योऽ-
प्यल्ला चेति तदेकमेव बहुधा सत्यं परं धीमहि ॥ ६ ॥

तानसेन ! त्वमिमं श्लोकं रागयोगेन गीत्वा मङ्गलेन सभां समापय।

(तानसेनस्तं श्लोकं गायति ।)

(इति निष्क्रान्तः अकबरः, तदनन्तरं सलीम्, तदनन्तरं तन्मन्त्रिणः, ततो हिन्दुजैनादिविविधमतीयाः। अवहीनाः केचन मुसल्मानाः संभूय महाराजविषये स्वीयं प्रकोपं मुखविकारैः हस्ताभिनयैश्च व्यञ्जयन्तः मन्दमन्दमपक्रामन्ति ।)

॥ इति प्रथमोऽङ्कः ॥

## ॥ अथ द्वितीयोऽङ्कः ॥

(ततः प्रविशति अब्दुल् कादिर् बदौनी)

अ. का. ब.—द्वौ गर्दभौ ! एकः श्वा ! गर्दभौ, श्वा ! श्वा, गर्दभौ !

(इति मुहुर्मुहुरात्मगतं वदन्नितस्ततः परिक्रामति। ततः प्रविशति अधिकारादवरोपितः अब्दुन् नबिः।)

अ. नबिः—क एष भ्रान्त इव किमपि स्वगतमेव प्रलपति ? भवतु। उपसृत्य पश्यामि। (तथा कृत्वा) कथं बदौनी ? (अंसे तमुपस्पृशन्) बदौनि ! क एष जपः 'गर्दभौ, श्वा' 'श्वा गर्दभौ' इति ?

अ. का. ब.—फ़ैसल्-फ़ैसी—तावुभावपि गर्दभौ। स नीचो हिन्दुः बीरबरः श्वा। त्वया इबदत्खानामण्डपे न सन्निहितम्।

अ. नबिः—ब्रह्मघ्न इत्यहमधिकारादवरोपितो भ्रष्टेन महाराजेन। कथं मे तत्र प्रवेशः ? किं तत्र वृत्तम् ?

अ. का. ब.—'अल्ला हो अकबर्' इति नूतना अभिवादनोक्तिर्महाराजेन आदिष्टा। किं तात्पर्यम् ? अहमकबर एव अल्ला, परमो देव इति। अहो, कियानहङ्कारोऽस्य य आत्मानमीश्वरं वा मुहम्मत्स्थाने प्राप्तं देवदूतं वा मन्यते !

(ततः प्रविशति मख्दुमुल् मुल्क् मौलाना अब्दुल्ला सुल्तान्पूरी।)

अ. सु. पूरि—'दिन् इलाहि'! 'तौहीद्'! धिक् ! क एष मतिविप्लवो महाराजस्य, विशिष्य मयि गुरुभूते प्रद्वेषश्च ! मां हठादाहूय तत्तत्पृष्ट्वा मय्युत्तरयत्येव स्वमुखेन इब्राहिम् काजिमुखेन मीमा-प्रतिवादिमुखेन च विरुद्धं तत्तद् वदन्

मां पर्याकुलयति, जोषयति, ह्रेपयति च। न धीया, न सुन्नी, न मेह्दी; सूफ़ी, सूफ़ी इति वदन्त एते फ़ेसल्, फ़ैसी, महाराजश्च तत्त्वतो हिन्दव एव। लवपुरे एकमपि कोरान्-पुस्तकं प्रार्थनामन्दिरं वा नास्ति। यदि कोऽपि अस्मासु गोघ्न उपलभ्यते, स हन्यते तत्र। नानकपथीया अस्मद्वैरिष्वग्रतमाः तत्प्रदेशे; तद्गुरोः रामदासस्य सन्देशाद् अमृतसरोनामकतडागनिर्माणार्थं महाराजेन भूमिरपि तस्मै वितीर्णा।

अ. का. ब.—सुल्तानूपुरि! इब्राहिम् खाजिना कपोलचिबुकश्मश्रुवपनं मुसल्मानैः कर्तुं शक्यं, तत्र न दोष इति निर्णयो दत्तः।

अ. सु. पूरि.—अपि सत्यम्? अनेन श्मश्रुणेव अस्माकं पृथक्ता हिन्दुपशूनां च अस्मान् प्रति भयं च भवति; कथमिदं त्यक्तुं शक्ष्यामः?

(ततः प्रविशति मुल्ला मुहम्मद् यसूडी)

मु. मु. यसूडी—अये क एतेऽत्र त्रयः संमिलिताः? कथं सुन्नीनेता अब्दुन्नबिः, यस्य प्रतोदेन वयं धीयाः सहस्रशो नाशिता महाराजेन। मन्येऽद्य अयमपि राजमानात्पतितः। 'अत्युत्कटैः पुण्यपापैरिहैव फलमश्नुते।' अनेन कण्टकेन वयमपास्ताः, अद्य अयमपि कण्टकोऽपास्तः।

अ. नबिः—सलामलीकुम्! किं मुहम्मद् यसूडी? स्वागतम्। ननु भवान् तेन ब्राह्मणहतकेन देवीनाम्ना सह मञ्चोपरि रज्जुभिराकृष्टः प्रासादे निशासु महाराजशयनागारवातायनपार्श्वे लम्बासन उपविश्य तत्तदुपदेशं कुर्वन्नासीत्। तथाहि त्वयि आदर आसीन्महाराजस्य। देवीद्विज एव तद्गौरवमद्याप्यनुभवति। भवांस्तु साक्षादेव तस्मादुच्चस्थानात्पातितः।

मु.मु. यसूडी—अहं जौनूपुर् खाज़ी इतीममधिकारमादाय श्रद्धावत्सु मुहम्मदीयेष्वादेशं विसृष्टवानस्मि-'यदेनं परित्यक्तमुहम्मदीयमार्गं महाराजं प्रति द्रोहः, कलहः, प्रक्षोभश्च न्याय्यः, तत्र यथाशक्ति प्रचारः प्रयत्नश्च उपक्रम्यता'मिति। अस्ति काबूल्-प्रदेशे महाराजस्य वैमातुरो भ्राता मुहम्मद् हकीम्, स सम्यक् श्रद्धालुः, तमत्र देहल्यां चक्रवर्तिनं करिष्यामः।

अ.नबिः—काबूल्-पर्यन्तं किमर्थं गन्तव्यम्? अत्रैवास्ति कुमारः सलीम्। पितापुत्रयोर्यदि द्वैधमुद्भेदयामः, तेनैव सर्वं साधयितुं शक्ष्यामः।

अ. सु. पूरि—तादृशो भेदः सद्यः कर्तुं न शक्यते। सर्वथा महाराजप्रतिबिम्बवत् कुमारोऽद्य वर्तते। हिन्दुभार्या, हिन्दु-सूफ़ी-साधुसमागमः, दिन्-इलाहि-सदस्यता—सर्वमेतत् तद्विषयेऽपि विरुद्धं वर्तते।

अ.का.ब.—कुमारमहाराजयोर्भेदः क्रमेण साधयितुं शक्यः। किन्तु प्रथममयमध्यात्मसभाव्यासङ्गः परिसमापयितव्यः। यद् वा तद् वा आज्ञापयति चित्तभ्रान्त्या—रामायणमिति हिन्दुमतचरित्रकाव्यं संस्कृतभाषायामस्ति; यतः सर्वे जनाः राममुपासते, 'राम राम' इति जपन्ति, ततस्तस्य पुस्तकस्य पारसीकभाषायामनुवादः क्रियतामिति आज्ञापयत्। तत्र दैवावतारः ईश्वर इत्युपास्यमानः कथानामकः परिचारिकया राज्यान्निर्वास्यते, अरण्ये भ्रमति, तत्पत्नीं राक्षसः अपहरति, रोदिति, कपीनां साह्यं याचते......

मु.मु. यसूडी—इयमेव कथा अद्य वाराणसीयेन तुलसीनाम्ना कविना अवधिभाषायां प्रणीता सर्वत्र जनैर्गीयते। श्रूयते मया यत्तुळसीतः सन्देशं प्राप्य राष्ट्रे कपयो न हिंसितव्या इति महाराजेन आदेशो निसृष्ट इति!

अ.सु.पूरि—कपयः, कपयः! मन्ये आमहाराजं सर्व एते कपयः!

अ. का. ब.—इतोऽन्यदपि संभाव्यते। नास्ति हिन्दुमते कोऽपि देवः, यस्य कश्चिन्मृगः पक्षी वा न वाहनं भवति। एतादृशा अन्येऽपि आदेशा महाराजेन हिन्दूनां कृते प्रवर्तयिष्यन्त एव। सर्वस्यास्य अनर्थस्य बुद्धिभ्रंशस्य अमुसल्मानीयस्य कार्यकलापस्य च मूलं किमिति प्रतिभाति वा भवताम्?

सर्वे—(सादरम्) किं किम्? न हि भवानिव वयं तथा सन्निकृष्टा महाराजस्य, न वा सूक्ष्मदर्शिनः।

अ. का. ब.—त्रयो मृगाः! द्वौ गर्दभौ! एकः श्वा!

सर्वे—स्पष्टमुच्यताम्।

अ. का. ब.—फ़ैसल्-फ़ैसी-उभौ गर्दभौ, वीरवरः श्वा। सूफ़ीकञ्चुकच्छन्नौ द्वौ हिन्दू, साक्षाद् हिन्दुरपरः। यदि श्वानमेनं निष्कासयामो राजसभातः, ततः सर्वमन्यत्सुकरं स्यात्। अन्तःपुरे बहुस्त्रीके बहुपरिजने कोऽपि कार्यक्रमोऽपि चिन्तयितुं शक्यते। सुकुमारतरलप्रकृतिः रासिवयविवशश्च सलीम्।

अ. नबिः—वीरवरः कः?

अ. का. ब.—कः? कोऽपि दरिद्रः रथ्याचर आसीत् महेशदासो नाम।

अ. नबिः—किं ब्राह्मणः?

अ. का. बः—न हि। स्तुतिपाठकजातीयः।

अ. नबिः—किं तस्य पदमिति परिच्छेत्तुं न शक्यते। एकदा वीरो भूत्वा संग्रामं व्रजति, जयेन प्रतिनिवर्तते। अन्यदा श्लोकं करोति। अन्यदा गायति। अन्यदा च हास्यालापैः महाराजं प्रहर्षयति प्रहासयति। वाल्लभ्यात् राजहृदये दृढरूढ एतादृशः कथमुत्पाटनीयः?

अ. सु. पूरि—तानसेनप्रभृतिषु स्वीकृतमुहम्मदीयमार्गेषु संगीत-सम्राट्सु वर्तमानेषु, वीरवरस्य गीतं किमर्थम् ?

मु. मु. यस्डी—परिहासवार्तासु कदाचिद् महाराजगौरवमपि अगणयित्वा स्वप्रहेलिकाभिः तं विरसीकुर्यात्। अतः 'परोक्षमपि महाराजं प्रति तत्तदुक्त्वा परिहसति, अपवदति' इति प्रवादं प्रचार्य महाराजं कोपयित्वा वीरवरमास्थानात् निष्कासयामः। तदनन्तरमन्तःपुरे प्रयोगं चिन्तयिष्यामः।

अ. का. ब.—एष श्वा यदि द्रावितः, ततः सर्वं शोभनं स्यात्।

(इति सर्वे निष्क्रान्ताः।)

(इति विष्कम्भकः।)

(आस्थानमण्डपः। ततः प्रविशति सिंहासनासीनः अकबर-चक्रवर्ती। तत्पार्श्वतश्च आसीनाः तिष्ठन्तश्च अबुल् फ़ेसल्-प्रभृतयो मन्त्रिणः, इतरे प्रधानपुरुषाश्च।)

अकबरः—फ़ेसल्! कस्यापि कुचोदनया वीरवरं प्रति विपरीत-ग्रहेण मया असमीक्ष्यकारितया तत्कृतं, येनाद्य पश्चात्तापेन दूयतेतमां मे मानसम्।

अबुल् फ़ेसल्—आपातत एव ग्राह्यः परिहासो नाम, न स विचारसहः। तेन किमुक्तं, येन महाराजस्य अन्यथाग्रहो जातः?

अक.—शकुनापशकुनविषये आवयोरालापः संवृत्तः। वीरवरेण कथितम्—'अस्ति नगरे कश्चन पुरुषः य उषसि दृष्टश्चेत् द्रष्टुस्तस्मिन् दिने आहारो लुप्येत' इति। परीक्षाकुतुकिना मया स पुरुष आनीतः। पश्चात्तत्तद्राज्यकार्ये मग्नस्य मे यद् एकवारमनियतवेलं किमपि भोजनं भवति, तदपि न कर्तुं पारितम्। क्षुधा भ्रष्टविवेकः पुरुषमाहूय अपशकुन-भूत एष हन्यतामिति आज्ञापयम्। वीरवर आगत्य

वदति—'तस्य उषसि दर्शनेन भवतामाहार एव नष्टः, भवतो दर्शनेन तस्य प्राणा एव नष्टाः। युवयोर्द्वयोर्मध्ये कोऽधिकतया अपशकुनभूतः-सः, भवान् वा?' इति पृच्छन् अहसत्। न मया हसितुं पारितं, क्षुधा सह क्रोध एव उदजृम्भत।

अ. फ्रे.—ननु दृश्यत एव महाराजस्य मुखे अन्तर्निस्समाहितता हृदयस्य। 'तथाविधः प्रत्युत्पन्नमतिः, प्रतिभाशाली, हास्ये कुशलः पारिषदो यदि स्यात् स तत्पदे राजास्थाने नियोक्ष्यत' इति राज्ञ आज्ञानुसारं पौरजानपदेषु आघोषितं, वार्ताहराश्च सन्दिष्टाः 'यदि तादृशः कोऽपि दृश्येत, स महाराजसन्निधिमानेतव्य' इति।

(प्रविश्य)

राजपुरुषः—महाराज! कश्चिदेकाक्षः प्राप्तः, महाराजदिदृक्षया।

अक.—एकाक्षः? प्रवेशय।

अ. फ्रे.—स्यादेष वीरवरस्थानाभिलाषी?

(प्रविश्य)

काणः—आम्, तथैवागतोऽहम्।

अ. फ्रे.—महाराज! तत्परीक्ष्यतामेषः। प्रायेण रूपेण विकृताः बुद्ध्या तीक्ष्णा भवन्ति।

अक.—त्वमेव प्रथममेतं पृच्छ।

अ. फ्रे.—भोः! लोके यावन्तः समुद्राः, तेषु सर्वेषु आहत्य कतिसंख्याकानि मुक्ताफलानि सन्ति?

काणः—पृथिव्यां यावन्तः प्रजाः, तासामाहत्य यावन्ति अक्षीणि तावन्ति मौक्तिकानि।

अ. फ्रे.—शरीरस्य किं परमभोग्यं सौख्यम्?

काण:—आरोग्यम् ।

खानखान:—सर्वोत्कृष्टं शस्त्रं किम् ?

काण:—बुद्धि: ।

राजा तोडरमल्ल:—शर्करा पांसवश्च मिश्रिता वर्तन्तेऽत्र । अकृत्वा तयोरुपरि जलदानं, केनोपायेन तयो: पृथक्करणं शक्यम् ?

काण:—नात्र उपायविशेषस्य आवश्यकता । संकीर्णमुभयमिदं यदि स्थण्डिले आस्तीर्णं भवति, तदा पिपीलिका: स्वयमेवागत्य शर्करामादायापसरेयु: ।

अक.—कुमार: सलीं किमपि प्रष्टुमिच्छति ?

सलीम्—किं तत् पुरुषं दहति, विना अग्निम् ?

काण:—चिन्ता ।

अक.—अहमेव स्वयं किमपि पृच्छामि—क: पुरुषव्यापारेषु नीचतम: ?

काण:—सेवा, भिक्षा ।

अक.—त्वां मन्त्रिपदे वीरवरस्थाने स्वीकर्तुं सन्नद्धोऽस्मि ।

काण:—कथं मे तादृशं सामर्थ्यं, वीरवरस्थानमास्थातुम् ?

अक.—कस्त्वम्, कुत्र त्वया अधीतम् ?

काण:—अहं कश्चिदकिञ्चन: पुरुष: । वीरवरादेव किञ्चित्तदा तदा शुश्रुवानहं यत्किञ्चित् जानामि ।

अक.—यदि तं गुरुमानयसि, पूर्वाधिष्ठितं स्थानं पुनस्तस्मै प्रदास्यामि ।

काण:—तथा ।

(इत्युक्त्वा परिवृत्य अक्ष्युपरि कृतं पिधानं श्मश्रु च अपनीय यथावद्रूपेण स्वात्मानं प्रकाशयति । सर्वे विस्मिता: परस्परं वीक्षन्ते ।)

अक.—(सानन्दम्) किमिदं सत्यम्? आम्, सत्यमेव। काणस्य उत्तराणि, वचनशैली च तदन्तःस्थो वीरवर एव वदतीति मम संदेहमजनयन्। एहि वीरवर! एहि, गृहाण खड्गम् उष्णीषं च।

(वीरवरः तथा करोति।)

वीरवरः—यावता पुनराहूये तावता कालेन महाराजक्षेम-चिन्तयैव आविष्टेन मया श्रीभानुचन्द्रगणिद्वारा सूर्यसहस्र-नामस्तोत्रं महाराजार्थे सचित्रं विलिख्य समपादयम्। इदं तद् गृह्यताम्।

(इत्यर्पयति। महाराजो गृहीत्वा प्रसार्य दृष्ट्वा नेत्रमोर-र्पयति।)

राजपुरुषः—महाराज! मुल्लाषेरी दर्शनावसरप्रार्थी वर्तते।

मुल्लाषेरी—चक्रवर्तिन्! वीरवरप्रेरणया मया सूर्यसहस्रनामानि पारसीकभाषया 'हसारषेरा' इति नाम्ना अनूदितानि। तदत्र समर्पयितुमिच्छामि।

(इत्यर्पयति। महाराजो गृहीत्वा, दृष्ट्वा सलीं-हस्ते समर्पयति)।

अक.—फ़ेसल्! मया कश्चित्स्वप्नो दृष्टः, तस्मिन् रामः, लक्ष्मणः, सीता, हनूमांश्च मत्पुरस्तादाविर्भूताः। रामः स्वीयमभयहस्तं मां प्रति प्रसार्य योगवासिष्ठं नाम ग्रन्थं मह्यं प्रदाय, परिवर्तयैतत्पारसीकभाषया इत्यादिशत्।

वीरवरः—स एष योगवासिष्ठो नाम अद्वैतवेदान्तग्रन्थः तौहीदनुभवरसिकानां हृदयंगमो भवेत्।

अक.—साधु, रामाज्ञा करिष्यत एव। (मुल्लाषेरीं वीक्ष्य) मुल्लाषेरि! अप्यन्यमपि कमपि संस्कृतग्रन्थपरिवर्तमद्य करोषि?

मु.षे—आम् महाराज! हरिवंशः परिवर्त्यते; एष पूर्वमेव अनुवादार्थमादिष्टस्य महाभारतस्य परिशिष्टभूतः।

अक.—वेदेषु अथर्ववेदे भैषज्यादयो बहवोऽर्था वर्तन्त इति श्रूयते। तदथर्ववेदानुवादोऽपि प्रस्तूयताम्।

अ.फ़े.—भवतु, हाजी इबराहिम् एतत्कार्यं करिष्यति।

अक.—अध्यात्मविषयमतिरिच्य अन्यस्मिन्नपि संस्कृतसाहित्ये दृष्टिर्दीयताम्।

अ. फ़े.—दीयत एव। सिंहासनद्वात्रिंशदिति कथाः बदौनी-हस्ते दत्ताः। भ्राता मे लीलावती नाम गणितशास्त्र-मद्य गृहीतम्। षाहाबादीयेन मुल्लाषा-मुहम्मदेन काश्मी-रचरित्रप्रतिपादिनी बहुविचित्रा वस्तुपूर्णा राजतरङ्गिणी नाम कृतिरपि अनूद्यते।

अक.—अनूदितानि पुस्तकानि चित्रकरान् नियोज्य मनोहरै-रालेख्यैरुज्ज्वलीकुरुष्व। यदा बाल्ये पित्रा सह काबुल्-प्रदेशेऽहमासं, तदा पितृनियोजितैश्चित्रकरैस्सह मे संस्तवो जातः, तेषां शिल्पकर्म निरूपयतो मम चित्रकलायां रेखा-वर्णादिषु कापि संविदुद्बुद्धा; ततःप्रभृत्येव अभिवृद्धं मे चित्रकलारासिवयमिदम्।

अ. फ़े.—नैतद्विस्मर्यते।

अक.—अस्मिन्ननुवादकर्मसंपत्तये प्रत्येकम् अनुवादकेन संस्कृतविदुषः कस्यापि सहकारो ग्राह्यः।

(प्रविश्य)

राजपुरुषः—महाराज! पण्डितः कश्चित्।

अक.—आगच्छत्वेषः।

(राजपुरुषो गत्वा पण्डितं विहारिकृष्णदासाभिधं प्रवेशयति।)

वि. कृष्णदासः—(प्रणम्य) महाराजेन बहवः संस्कृतग्रन्थाः पारसीकभाषया अनुवादार्थं निर्दिष्टाः। प्राय एष कार्यविशेषः उभयभाषाविद्भिः सम्यक् निर्वर्तयितुं शक्यः।

तादृशोभयभाषाप्रावीण्यार्थं मया 'पारसीक-प्रकाश' इति व्याकरणकोशग्रन्थो विरचितः, तं महाराजाय उपहारीकर्तुमिच्छामि।

अक.—फ़ैसल्! पश्य। यन्मे मनसि चिन्तितं तदेव विदुषा अनेन साधितम्। समुचितमस्मै संमानं देहि। भवतु, फ़ैसल्! अपि कोऽपि ग्रन्थः पारसीकभाषातः संस्कृतभाषामानीयते?

अ. फ़ै.—अस्मिन् विषये महाराजमनुक्त्वैव किमपि प्रस्तुतम्। अद्य पृष्टे च न गोप्यमिति प्रकटीक्रियते। यन्मया महाराजस्य वृत्तान्त 'ऐनि अकबरी' इति सन्दृभ्यते, तस्य महेश-ठक्कुर इति मैथिलः पण्डितः 'सर्वदेशवृत्तान्तसंग्रहः' इति नाम्ना अनुवादं कुर्वन्नास्ते। सोऽपि अत्र सन्निहित एव महाराजदर्शनोत्सुकः।

अक.—अहमपि तद्दर्शनोत्सुकः।

(फ़ैसल् राजपुरुषं संज्ञापयति। राजपुरुषो गत्वा महेशठक्कुरेण सह प्रत्यागच्छति।)

पण्डितवर्य! अनुवादादस्मात् यत्किञ्चित् श्रोतुमिच्छामि।

महेशठक्कुरः—महाराजस्यैव पाण्डित्यं पण्डितपक्षपातितां चाधिकृत्य तत्र मया लिखितमिदं समयस्यास्य समुचितं स्यात्—

"निःशेषवाङ्मयाम्भोधेः पारदृश्वा विदां वरः।
नास्ति तद्वाङ्मये तेन न दृष्टं यच्च न श्रुतम्॥"

इति।

अक.—भवतु। न वयमात्मप्रशंसाश्रवणलालसाः। किञ्च अतिशयोक्तिरियम्। नास्माकं लिखितपठनपरिचयोऽस्ति इति सर्वविदितमेवेदम्। केवलं श्रुत्वा सर्वं गृह्णीमः।

अ. फ़े—स्मृतिश्च महाराजानामन्यादृशं दृढा, श्रुतं सर्वं धारयति ।

अक.—फ़ेसल् ! ममैवेदमाश्चर्यविहमासीत् पूर्वं कथमेवं तासु तासु प्रक्रियासु बुद्धेरुद्बुद्धिः स्वरसतः संजायत इति। अनन्तरं यदा देवी-नामकाद् ब्राह्मणात् श्रुत्वा श्रुत्वा कर्म-वादं पुनर्जन्मवादं चाहं सत्यमिति अभ्युपागमम्, तदा प्रश्न एष सर्वथा समाहितोऽभूत्। पूर्वजन्मवासना-नुस्यूतिविलसितमेतत्सर्वम् ।

म. ठ.—महाराज ! विविधं परिश्रमेण पठित्वा साधयतामपि नैतादृशी परिपक्वा सर्वावगाहिनी प्रज्ञा संपद्यते। अनायासेन आश्चर्यभूतेव चेयं प्रज्ञा कमपि अनधीत-वन्तमपि स्वयं वृणीते। तत्र पूर्वकर्मवासनानुबन्धमेव स्मरन्ति कारणमस्माकं शास्त्राणि ।

तत्तत्तृणादिकं गोष्ठे पूर्वं भुक्तवती हि गौः ।
सारभूतं स्रवत्यद्य शुद्धं क्षीरं तदूधसः ॥ १ ॥

अक.—अबुल् फ़ेसल् ! *किं दास्यामि अस्मै महापण्डिताय ?* भवतु, विहारप्रदेशे तीरभुक्त्यामेप स्वीकृत्य राज्यं, कुलक्रमेण तत्र मदाज्ञानुग्रहभाक् दर्भङ्गानगरात् राजपदं निर्वहतु ।

अ. फ़े.—नास्त्येव प्रसन्नमनसो महाराजस्य औदार्यस्य अवधिः ।

अक.—फ़ेसल् ! 'ऐनि अकबरि'-ग्रन्थे मदीय एव वृत्तान्तः केवलं मास्तु। हिन्दुशास्त्राणां च संक्षिप्य निरूपणं तत्र निवेश्यताम् ।

अ. फ़े.—न केवलं दर्शनानाम्, अन्येषामपि शास्त्राणां संग्रहः प्रदास्यते, विशिष्य संगीतकलायाः ।

अक.—तस्मारितोऽस्मि। तत्कुतो नाद्यावधि समागतः संगीतसम्राट् तानसेनः?

बीरवरः—स हि महाराजेनैव सन्दिष्टो वृन्दावनं गतः, कदा कथं महाराजेन तद्गुरोः हरिदासस्वामिनो गान्धर्वममानुषं श्रोतुं शक्यत इत्यधिगन्तुम्। सूरदासस्य गीतान्यपि कर्णाकर्णिकया श्रुतवान् कुमारोऽपि सलीम् तमपि महात्मानं सूरदासं साक्षादुपगन्तुं वाञ्छति। किञ्च मानसिंहस्य प्रासादे कोऽपि दाक्षिणात्यः संगीतशास्त्रपारंगतः समागतः, तं मानसिंहः तानसेनमुखेन राजास्थानमानेतुमभिलषति। सर्वमेतत् पर्यवेक्ष्य तानसेनो नचिरादत्र समेष्यत्येव।

(इति वीरवरे वदत्येव प्रविशति तानसेनः।)

तानसेनः—(प्रणम्य) महाराज! वृन्दावनं गतवता मया प्रथमं तत्रत्या गोस्वामिनो दृष्टाः, महाराजस्य यः स्वप्न आसीत् स तेभ्यो निवेदितः। महाराजमनोरथमनुसृत्य चत्वारि कृष्णमन्दिराणि तत्र निर्माप्यन्ते। गोस्वामिनो महाराजस्य वृन्दावनविजयं प्रतीक्षमाणा वर्तन्ते।

अक.—साधु! अपि दृष्टा गुरवस्ते हरिदासस्वामिनः? किं फलेग्रहिः स्यान्मे मनोरथः तेषां विषये?

तान.—(वक्तुं विलम्बते)।

अक.—स्वैरमुच्यताम्। मन्ये भगवन्तमपहाय न कस्यचिदन्यस्य कृते गास्यन्ति ते स्वामिनः।

वीरवरः—तानसेन! मया उपायश्चिन्तितः। भगवद्दर्शनवेषेण त्वया सह समागच्छतु महाराजः। त्वमपि स्वामिनां निकटे यत्किमपि गानं कुरु। राजसदसि गीतोद्योगस्य तव, मन्ये, एषु वर्षेषु नूनमध्यात्मवासनाः किञ्चिदिव च्युतं तावता न्यूनगुणं च गानं संजातम्। तच्छ्रुत्वा दूयमानेन, अथापि त्वदपेक्षया दयमानेन, गुरुणा [illegible]

हि गातव्यमासीद्' इति शुद्धामुत्कृष्टां देवीं रीतिं प्रदर्शयितुं स्वयं गास्यते ।

अक.—बीरवर! साधु!

तव स्नेहे च बुद्धौ चाप्युभयोर्जागरूकयो: ।
किं भविष्यति दुस्साधमपि क्लिष्टे क्रियाविधौ ॥ २ ॥

(तत: प्रविशति मानसिंह: सह नूतनेन संगीतविदुषा ।)

सलीम्—(मानसिंहं प्रति) एहि भाव !

अक.—एहि राजकुमार मानसिंह ! किं वा कार्यं त्वामत्रानयत्यद्य?

तान.—महाराज ! एतदेव निवेदयितुमुन्मुखोऽस्ति । य एष संगीताचार्य: नूतन: प्राप्त: स कर्णाटक: पुण्डरीकविट्ठलनामा । अनेन 'रागमञ्जरी' नाम गीतशास्त्रप्रतिपादको ग्रन्थो विरचित: ।

पुण्डरीकविट्ठल:—माधवसिंह-मानसिंहनामभ्याम् अङ्कितश्च ।

अक.—(मानसिंहं प्रति) जयपुरास्थानेऽद्य वर्ततेऽसौ?

मानसिंह:—आम् महाराज ! इत: पूर्वं खान्देश-अधिपते: बुर्हन्खानस्य सदसि आसीत् ।

पु. वि.—तत्र 'सद्रागमञ्जरी'ति ग्रन्थं व्यरचयम् ।

अक.—अपि गेय एव भवतोऽधिकार:, उत नृत्ते च ?

पु. वि.—जानन्नपि महाराज: पृच्छति । 'गीतं वाद्यं च नृत्तं च त्रयं संगीतमुच्यते' इति हि संगीतशब्दार्थ: ।

अक.—नृत्तमप्यधिकृत्य कोऽपि ग्रन्थ: कृत: ? अथवाद्य क्रियते, कर्तुमिष्यते वा ?

पु. वि.—'अकबरनृपरुच्यर्थं' 'नर्तननिर्णयं' नाम ग्रन्थं निर्मिमित्सुरस्मि ।

अक.—वीरवर, अत्र हिन्दुस्थाने यद् यथा च गीयते, तदेव तथैव च गीयते दक्षिणापथेऽपि ।

वीरवरः—बाढम् । एतदेव तत्रापि गीयते । एकमेवोभयोर्मूलभूतं शास्त्रम् ।

अक.—कालेन कोऽपि भेद आगत एतयोः प्रदेशयोः गान-शैल्याम् ?

वीरवरः—यथा वा एकस्याः संस्कृतमातुरेव प्रसूता उत्तरापथीना भाषाः परस्परं भिद्यन्ते रूपभेदैः, तथैव एकस्माद् भरतादिमूलशास्त्रादेव उभयमपि गानमुत्पन्नम् ।

अक.—अद्य तु कीदृशो भेद आयात एतयोः ?

वीरवरः—ननु तानसेनविट्ठलाभ्यामेष प्रश्नो व्याख्येयः ।

तान.—भेद आभासतः, नाममात्रविश्रान्तश्च । किं वा मन्यते शास्त्रपारदृश्वा विट्ठलः ?

पु.वि.—यद्यप्यहं कर्णाटेषु प्रसूतः अद्य कतिचिद्वर्षान् तत्र तत्र उत्तरापथ एव सञ्चरामि । प्रथमं कर्णाटमार्गे विदुषा सता मया, अधुना हिन्दुस्थानीयं गीतं सम्यगभीक्ष्णं च अश्रावि अभ्यस्तं च । शास्त्रपरिशीलनेन च विषय एष विचारितः । मम तु भाति भेद एतयोरेवं वर्तत इति । गमकभेदेषु केचनात्र उपयुज्यन्ते, अपरे दक्षिणस्यां दिशि । रागनामसु परस्परव्यामोहः सञ्जातः । रागस्वरूपे च न तावानत्र नियमः, कस्यापि महतो गायकस्य विषये स्वातन्त्र्यस्य *अवसरोऽत्रानुमतः, येन केषुचिद्रागेषु तत्तद्गुरुशिष्य-*संप्रदायेषु मिथो भेदो दृश्यते । तानसेनवत् नायकभूतगायकोपज्ञं च प्रथन्ते एकस्यापि रागस्य भिन्नतया उल्लिख्यमाना अवान्तररूपभेदाः । के के रागाः कस्मिन् कस्मिन् दिवसभागे गातव्या इत्यपि अत्र उत्तरापथे यथा नियमः अनुस्मियते, न तथा दक्षिणापथे । रागाणां वर्गीकरणे,

आलापपद्धत्याम्, अन्यस्मिन्नपि एतादृशे लघीयसि विषये, भेदो भाति, न त्वाधारभूतेषु शास्त्रतत्त्वेषु ।

अक.—नर्तनविषये ?

पु. वि.—एषैव कथा तत्रापि । भरतनन्दिकेश्वरादय एव उभयमार्गयोरपि मूलाचार्याः । उभयमपि भावरागताळरूपे समान एव आधारे प्रतिष्ठितम् । किन्तु नर्तनप्रबन्धानां स्वरूपे, अभिनयप्रदर्शनपद्धत्यां तथा लयवैचित्र्यप्रदर्शनार्थं कल्पितेषु हस्तपादविन्यास-पादताडनादिषु कालक्रमेण कश्चन रीतिभेदः संजातः ।

अक.—तानसेन, वीरवर! ज्ञातं भवद्भ्यामन्तःपुरे मया शैशवादेव आदाय अभिवर्धिता 'नादिरा' इति मम प्रेमविशेषपात्रभूता, पात्रभूता गीतनाट्ययोः, अतीव चतुरा परिचारिका?

उभौ—नामतः श्रुता ।

अक.—आगामिन्यां संगीतगोष्ठ्यां यदेषा प्रदर्शयिष्यति, तन्नृत्तं पुण्डरीकविट्ठलेन शिक्षितं किमपि नूतनं कर्णाटमार्गादुपात्तं भवतु । मानसिंह! ननु तुभ्यमपि तादृशमायोजनं रोचते?

मान.—रोचते इति किं वक्तव्यम्? यथाध्यात्मभूमौ भिन्न-भिन्नमार्गाणां समन्वयो मृग्यते महाराजेन, तथा कलाप्रपञ्चेऽपीति मन्ये । विट्ठल! प्रयतस्व, विजयस्व च ।

पु.वि.—महाराज! स्वल्प एव कालः। नूतनो मार्गश्च शिक्षयितव्यः।

अक.—आचार्य! यदि पात्रमुत्तमगुणं स्यात् तदा शिक्षा व्याजभूतैव । कथं वा मन्यते वीरवरः?

उद्भिद्यते यथा पुष्पं स्त्यायते सौरभं यथा ।
तथा काले व्यनक्त्येव सौभाग्यं वासना-ऋतुः ॥ ३ ॥

॥ निष्क्रान्ताः सर्वे ॥

॥ इति द्वितीयोऽङ्कः ॥

## ॥ अथ तृतीयोऽङ्कः ॥

(अन्तःपुरैकदेशः—संमिलितः परिचारिणीवर्गः)

प्रथमा—(अपरां वीक्ष्य) हला! किं दृश्यते त्वया नादिरायां नूतनो यौवनोद्भेदः!

द्वितीया—आम्।

मुग्धं लौल्यं सकलवनितालालनोत्कं गतं तत्
धत्ते तन्वी नतमुखमियं मन्दविन्यासभङ्गिम्।
जाग्रद्भावोल्लुलितनयनप्रान्तमङ्गं मुहुः स्वं
पश्यत्युच्च्छ्वसितविचलज्जृम्भिवक्षोऽशुकेयम्॥ १॥

प्रथमा—(नादिराहस्ते कामपि कुसुमकलिकां वीक्ष्य) हला! किमियं तव हस्ते अनार्कली?

अपरा—आम्, सत्यम्। अहो समुत्फुल्लसुषमा अनार्कल्येवेयं नादिरा!

नादिरा—अद्य किमिति मुहुर्मुहुः सर्वा अपि यूयं मामेव निध्यायथ! नास्ति अपर उद्योगो भवतीनाम्!

प्रथमा—मुग्धे! मृषा कोपेन वर्धयस एव अस्माकं वाचम्। नेयमुपमा केवलम्, यदिमास्त्वाम् अनार्कलीति आह्वयन्ति। अथवा कुतस्तस्या अपि कलिकायास्तव लक्ष्मीः? (अपरां वीक्ष्य) अयि अभिज्ञासि हस्तरेखानुवाचनकलायाम्। अपरिचारिणीजनोचितेयम् अस्याः लक्ष्मीः।

अपरा—तथ्यं मन्त्रितं त्वया।

नादिरा—(सपरिहासाक्षेपम्) आम्, इयमनार्कली कोणप्ररूढा काचित्, युवराजस्य चूडायां भविष्यति!

द्वितीया—कुतो नैवम्? अर्हत्येवेयं कलिका युवराजेनाघ्रातुम्।

प्रथमा—अयि, अलमुत्प्रेक्षाभिः। अनार्! सन्निवमाः, इहागच्छ, हस्तमुपनय। रेखाभ्य एव व्यक्तीभविष्यन्ति सर्वाणि। (इति अनार्हस्तमालम्ब्य) अहो पल्लवपेशलं रेखाजालितं पाणितलम्! (किञ्चिन्निरूप्य, सहसा सख्यौ विलोक्य) हला! युवामपि मया सह नमस्कुरुत अस्यै भविष्यद्भट्टिन्यै!

अनार्—आरम्भ एव प्रकृतिं दर्शयत यूयम्! अलमतिकोलाहलेन। मा कापि शृणुयाद् एतमुन्मादं वः।

अपरा—कुत, अनार्! पश्यामस्ते भाग्यरेखाम्।

(इति तस्या हस्तं गृह्णाति।)

अयि, किमेतदङ्गुलीयकं ते हस्ते?

अनार्—(निःश्वस्य) अस्त्येतदन्तरेण विषादयित्री कथा। बाल्ये केनापि भाग्यकथकेन हिन्दुसाधुना 'अहं महतीं लक्ष्मीं लप्स्ये, तथापि दारुणं दैवं न सहिष्यते' इत्यादिष्टम्। ततः तस्य साधोरनुग्रहेण मम माता (इति निःश्वस्य) इदं रक्षेति आमुक्तं मम अङ्गुल्यविमुक्तं मितम्।

(इति चिन्ताकुलं तत्पश्यति।)

अपरा—हन्त सौभाग्यवति! प्रतिहतममङ्गलम्। अस्त्वविहता प्रथमादिष्टा महती ते लक्ष्मीः। सर्वथा अस्माकं त्वन्न्यस्तशुभप्रेम्णामाशंसनैः सुमङ्गला विजयस्व! अनार्, अलमश्रुणा। (इति तामालिङ्ग्य अश्रु प्रमृज्य) किमप्यस्ति यत् चिन्त्यते? महाराजस्त्वयि पितेव नूनं श्लिष्यति। ध्रुवमेतादृश्याकृतिः कल्याणाय कल्पते। अयि, अनार्, इतः पश्य, कुरु किञ्चिद्गानम्।

(रभसात् प्रविशति राजपुरुषः कश्चन ।)

राजपुरुषः—अस्त्यत्र नादिरा ? नादिरा ! महाराजस्त्वामनुस्मारयति सन्निहिता-संगीतकाम् । 'पल्लववत् प्रथमयमो-रमणीयासि ! मनोहरं प्रथमरसबद्धं वस्तु किमपि नृत्तगीतेः प्रदर्शयितुं परिचयस्समाधीयताम्' इति ।

(निष्क्रान्तः ।)

प्रथमा—(साह्लादम्) स्थाने खलु निर्व्याजं कलाप्रियस्त्विन्हाति महाराजः । अयि मृगाक्षि ! शृणुमः किञ्चित् । किं तत् नास्मसि ? किमाज्ञां श्रुत्वा हरिणपोतक इव तरलीभवसि ?

अनार्—(सवितर्कम्) हरिण इति उद्बोधिताऽस्मि । (परितः पश्यन्ती) कुतो मदीयः प्रियको मृगः ? तिष्ठत यूयम् ! आगमिष्यामि ।

(इति रभसान् निष्क्रान्ता) ।

द्वितीया—किमत्र प्रमाद्यतेऽस्माभिः । भट्टिनी सर्वा नः आह्वयेत् । आगच्छत ।

(सर्वा निष्क्रान्ताः ।)

॥ इति तृतीयोऽङ्कः ॥

## ॥ अथ चतुर्थोऽङ्कः ॥

(युवराजप्रासादे उद्यानैकदेशः, प्रविशति युवराजस्सलीम् ।)

सलीम्—(उत्सुकालसं संचरन्)

उद्गन्धा पृथिवी वलत्यभि मरुत् तत्सौरभामेदुरः
लम्बांभःकणिकामणिः तिलकयत्यग्रं दलस्याभितः ।
निःश्वासैरभिधूप्य मानसमसौ मेघो गतो धौतताम्
उन्मुक्तेन्दुकरैस्सुदुस्सहदशां नेतुं मदीयोत्कताम् ॥ १ ॥

किमिति अति नामाद्य श्लिष्यति मे हृदयम् अस्मिन्नुद्याने प्रत्यग्रलघुवर्षविशेषितसौभाग्ये? मेघालोक एव उन्मनायितोऽभवम् । परिचितापि एषा वनिका किमद्य अकाण्डे मे चैतन्यं स्पृशति, तरलयति च? (परितः पश्यन्) अहो अस्याः कम्रतां मदीया वृत्तिरनुसरति!

धौतामृष्टमिदं मदीयहृदयं सञ्चारचन्द्राश्मवत्
हृष्टं वृक्षवदेतदङ्गमखिलं, फुल्लं मनः पुष्पवत् ।
स्पन्दे लघ्वलसं विमुक्तवपुषा गन्धानिलोऽयं मया
मच्चित्तोपरि कौमुदीव सुभगा काप्युत्कता लम्भते ॥ २ ॥

सत्यमत्र शान्तोदारशोभना कापि सन्निहिता लक्ष्मीः या मामुद्घाटितभावपूरं तरङ्गयति ।

(नेपथ्ये)

प्रियक, प्रियक !

सलीम्—(साश्चर्यहर्षम्) क एष स्वरः?

(किञ्चिदिव पर्यालोच्य)

मन्दानिलेन मम वाहित एष कोऽप-
मुद्भेदयन्मम हृदन्तमनोरथस्य ।
दूरादुपेत्य पुलकीकुरुतेऽखिलाङ्ग-
माविश्य मानसमहो तरलीकरोति ॥ ३ ॥

(पुनश्च नेपथ्ये)

प्रियक, क्वासि ? क्वासि !

सलीम्—(सवितर्कम्) किमिदं संबोधनम् ? वल्गुध्वनिरयं नूनं कस्याश्चन ललनायाः ।

तन्वी स्निग्धा स्वरव्यक्तिरियं रभसशोभना ।
अन्तस्संभवदव्यक्तभावानां व्यक्तिरेव मे ॥ ४ ॥

भवतु, एतत्संपुष्पितगुल्मान्तरितो वीक्षे।

(तथा करोति ।)

(ततः प्रविशति अनार्कली [नादिरा] )

अनार्—प्रियक ! क्वासि ? आयाहि, आयाहि ।

(इति निःश्वस्य श्रान्ता तद्गुल्मनिकटे तिष्ठति। अनवेक्षितकेन गुल्मस्थं पुष्पगुच्छं प्रति प्रसारयति करम् । सलीं गुच्छमेकमुच्चित्य तत्पाणिपुटाभिमुखं वितरति ।)

अनार्—(मृगपोतकमनसैव गुच्छमादाय तान्तोत्सुकं जिघ्रन्ती) कुतो नु खलु अनेन चपलहरिणेन गतं स्यात् ? अप्यत्रैव कुहचन लीलया गुल्मे अन्तर्हितस्स्यात् ? (इति परिवृत्य पश्यन्ती) कियदिव प्रियक! त्वन्मृगयया ताम्यत्येव मे पादः !

सलीम्—(सद्यो बहिरागत्य) एषोऽस्मि ते प्रियकः ।

(अनार् सकम्पस्विन्नगात्रा मूकं साश्चर्यं च अधोमुखं तिष्ठति ।)

सलीम्—सुन्दरि! सत्यं तान्तस्ते पादपल्लवः प्रियकमृगयया। किं संभावयत्वेष तं भाग्यवान् जनः!

अनार्—(आत्मगतम्) सत्यं प्रियक एवायं मे यदि युवराजस्स्यात्।

सलीम्—अयि, उत्कूलितमदीयमनोभावपूरे, का त्वम्?

अनार्—(धैर्यमालम्ब्य) भवन्तमजानन्ती न वेद्मि संबोधनसमुदाचारम्।

सलीम्—अलमलं समुदाचारविडम्बनैः। वर्त्तावहे ततोऽपि सन्निकृष्टायां भूम्याम्।

(इत्युपसरति।)

अनार्—(किञ्चिदपसृत्य) अयं महाराजहिन्दुस्नुषाया अन्तःपुरपरिचारिणीवर्गेषु कोऽपि जनः।

सलीम्—(साश्चर्यम्) कथम्?

अनार्—चिरादेव पितृभ्यां वियुक्ता बाल्यादेव महाराजप्रेम्णा वर्धितास्मि।

सलीम्—अथ किन्नाम्नी त्वम्?

अनार्—नादिरेति मां चिराय शुद्धान्ते व्यवहरन्ति।

सलीम्—

नादिरा मदिरा नूनं मादिनी मनसो मम।
सत्यमेतावदप्राप्तपाकं त्वं पुण्यमेव मे॥ ५॥

अनार्—अज्ञातजनेनात्र एकान्ते एतस्मिन्काले राजगृहोद्याने अनुचितं विलंबनं किंकरजनस्य।

सलीम्—तत्कुतस्त्वमत्र?

अनार्—(सहसा स्मृत्वेव) सम्यगुद्बोधिताऽस्मि। मदीयः प्रियो मृगः कुतोऽपि पलायितः। तन्मृगयया इतस्ततो भ्रमामि।

सलीम्—अहमपि काममपि हरिणीमेव मृगयामि।

अनार्—(सलज्जाधोमुखं भवति ।)

सलीम्—सुन्दरि ! त्वां प्रत्येव मामभिसारयन्त्यसौ कादम्बिनी आजगाम, अवरोधे अन्यत्रापि मां विमुखं परत्रासंस्तुताभिनवे कुत्रचिदुत्कयन्ती । त्वामोवासन्नगतां निवेदयितुं मन्येऽयं निशामुखगन्धवाहविटः संकेतभूमिमिमां संमृष्टज्योत्स्नादुकूलितफुल्लांघ्रिपां वनिकामानिनाय । अद्य व्यज्यते विशदं सुखिनोऽपि मे स्वान्तं किन्निमित्तमभजदकाण्डे शोकसन्दिग्धशून्यतामिति ।

अनार्—कं पुनरेनं मनोहरं मधुरालापमवगच्छामि ?

सलीम्—(सहर्षम्) अयि उन्मादयित्रि ! युवराजोऽस्मि, त्वदीयो दासः । त्वद्भट्टिनीभर्ताप्यस्मि, तवैवाद्यप्रभृति प्रेयान् ।

अनार्—(हृष्यति, सहसा सभयनिराशं शोचन्ती तिष्ठति ।)

सलीम्—

आताम्रकोमलकपोलयुगं प्रफुल्ल-
नेत्रं स्फुरद्रदपुटोल्लसदुत्स्मितश्रि ।
कान्ते ! कथं तव मुखाम्बुजमेतदद्य
सद्यो जगाम भयविह्वलपाण्डिमानम् ॥ ६ ॥

अयि भीरु, अलम् आशंकाभिः ।

(इति चिबुकं गृहीत्वा उन्नमयति मुखम् ।)

अनार् –(सविषादम्) कथमस्माकं भवतः सन्निधाने प्राप्तिः ? दूरे तु पुनर्दृष्टमनोरथस्य ! चण्डी भट्टिनी । गृहाश्च उग्रधर्मणः अकबरमहीपतेः । बहुगह्वरव्यवहारविषमा अन्तःपुरकथाः । अद्य लब्ध्वा भवन्तं, किं मोदताम्, उत दुर्गं मनोरथपथं निध्याय सीदतु मदीयमल्पदिदं परिचारिकाहृदयम् ?

(इति सबाष्पावनम्रमुखी तिष्ठति ।)

सलीम्—प्रेयसि ! अलं दुःखेन ।

पर्यस्तनेत्रकुसुमा बाष्पापीताननना त्वमियम् ।

निःश्वसती पृथिवीवद् वर्षान्ते तन्वि शोभसे कामम् ॥७॥

बाले ! आकररत्नमिव उचितसुवर्णसंयोगं विना एताव-त्कालमज्ञातवासेन अकृतार्था बलवत्पीडयसि मे मनः । अद्य त्वामासाद्य निवृत्तं मे हृदयं सर्वेभ्योऽपि विशेष-केभ्यो विषयेभ्यः । कथम् इमामनार्कलीमुपेत्य परत्र भ्रमतु मधुपः ? पुष्पेषु मे पलाशः, बकुलः, चम्पकश्च प्रियाः, अद्य तु इयमनार्कलिकैव प्रेष्ठा जाता । फलेषु च भारती-यस्य आम्रस्य तुलैव नास्तीति मे मतिः, अद्य तु अनार्-फलमेव स्वादुतमं मन्ये ।

(इति पार्श्वस्थद्रुमात् अनार्कलिकामेकामादित्सति ; किन्तु कण्टकेन विद्धाङ्गुलिर्भवति ।)

अनार्—(आश्चर्यमाविष्कुर्वती) कथं त्वमपि मां परिहससि ?

सलीम्—कथं त्वमपीति ?

अनार्—अपरोक्षे कियांचन मयि दत्तप्रेम्णां प्रमदाजनानामेव हि 'अनारकली'ति नाम परिहासाभिप्रकारः ।

(सलीम् मन्दं विमुञ्चति ; निष्क्रामति अनार्कली ।)

सलीम्—(तामेव पश्यन्)

कर्माभियोगचटुला घनभावालसाञ्चिता ।
अहो पदन्यासरीतिवैदग्धीयं लमश्रिता ॥ ९ ॥

हन्त ! सर्वाङ्गीनवद्यमिदं रूपम् । सफलमेव प्रास्फुरन्मे चक्षुः, अवधीरितमपि मया, प्रथममुद्यानप्रवेशे ।

औत्सुक्यमेव किं मे वपुरिदमासाद्य राजति स्माग्रे ।
किन्तु विहाय विहायश्शयनं ज्योत्स्नेयमवनि-
मवतीर्णा ॥ १० ॥

कथमद्य विकसितमपि फलिष्यति मे दिष्टम् ? कथमेतादृशीं भाग्यलक्ष्मीं प्राप्य अद्य अवरोधे वा, मिहिरुन्निसामुखे वा तृप्यतु मदीयं मनः ? (कण्टकविद्धामङ्गुलिं पुनः पश्यन्) किन्तु विघ्ननिहतमिव पन्थानमालोकये । सत्यमनार्मुखे कापि विषादरेखा विभाति । (किञ्चिन्निध्याय) सापि पुष्णात्येव मुखाब्जस्य अस्याः किमपि शान्तोदारं सौभाग्यम् ।

किं जन्मान्तरवासनेति वचनैः, सौन्दर्यमेवंविधं
कं वा न प्रथमेक्षणेऽपि जडमप्याकृष्य संमोहयेत् ।
तां भूत्यां सृजतः, चिरान्मम दृशोस्तां गूहमानस्य वा
दृष्टायामपि दुर्गमां विदधतो धिक् क्रौर्यमेतद्विधेः ॥ ११ ॥

(इति निष्क्रान्तः ।)

॥ इति चतुर्थोऽङ्कः ॥

## ॥ अथ पञ्चमोऽङ्कः ॥

(ततः प्रविशति सलीमस्य वल्लभः रहिम् खान्-नामा ।)

रहिम्—धिक् धर्मम् ! धिग् एनं भीरुकं महाराजम् ! किमत्र स्वदेशमुज्झित्वा धर्मानुसरणार्थं मोक्षार्थं च भारतभूमिमिमां वयमागताः ? भोगदारिद्र्येण शुष्यति मे स्वान्तम् । लुण्ठनकण्डूर्मे हस्त एव सादमायाति । अहो किमद्य करवाणि ?

(नेपथ्ये)

अहमद्य ते करणीयं बोधयामि ।

(श्रुत्वा) अये, कोऽयं स्वरो विषादतप्ते मयि आनन्दवर्षैः पुलकानि तनोति ?

(प्रविशति इस्मद्बीगम् ; विलोक्य)

इयं सा युवराजहिन्दुभार्याया अन्तेचरी मिहिरुन्निसामाता इस्मद्बीगम् गन्धद्रव्यरचनाचतुरा, सामान्यतस्सर्वचतुरा, मां प्रत्येव समायाति ।

(प्रविश्य)

इस्मद्बीगम्—रहिम् खान् !

रहिम्—आः, इस्मद्बीगम् ! भगिनि, स्वागतम्, अस्तु नः सिद्धिः ।

इ. बी.—रहिम् ! अस्त्येव सिद्धिः, यदि मदीयं मन्त्रमनुसरसि । निर्वेदसहचरौ आवाम् । उभयोरप्यावयोः अभ्रंलिहा मनोरथाः । परस्परोपकारिणौ भूत्वा साधयावः ।

रहिम्—भवति ! किं प्रपञ्च्यते ?

इ. बी.—ननु राजकुमारस्य निकटगतोऽसि । न त्वम् एकाकी संप्रतितनराज्योपक्रोशने । किं भणसि ? शोभनोऽसौ युवराजस्सलीम् स्वैरोपभोगप्रकृतिः । नीतिरिति धर्म इति तदा तदा महाराजेन निरुद्धप्रसरो युवराजः पितरि समुत्पन्नकोपो वर्तते । तच्छवयोपजापोऽयं कुमारः । तस्मिंश्च समारोपिते सिंहासनं, त्वं कोशाध्यक्षः, अहमेषा अवरोधमहेश्वरी ।

रहिम्—भवति, सुष्ठु मन्त्रितं भवत्या । सुप्रयोगोऽस्ममावाभ्याम् । इयं ते मन्त्रशक्तिः कार्यनिर्वहिऽप्यकुण्ठिता ममोपकाराय आस्ताम् । ममापि न रोचते यदसौ युवराजो महाराजेन नीतिमात्रचक्षुषा कयाचन हिन्दुस्त्रिया विवाहितः । आस्ते च ते जगन्मोहिनी पुत्री यामहमस्य सलीम्-प्रभोः महिषीपदे समारोपितां दिदृक्षामि । प्रकृत्यैव ललितोऽयं चपलश्च ।

इ. बी.—तदेतदेव ममात्र उद्योगकारणम् । तदर्थमेव, युवराजं मद्दुहितुः सौन्दर्येण प्रलोभयितुमेव आ अन्तःपुरप्रवेशाद् उपायं मृगममाणा, अद्य प्रतिरात्रि पानीयाद्युपहारोपहरणव्यापारमस्यै कथंचित्समपादयम् । अस्मिन् व्यापार एव मया 'अत्तर्' इति नूतनः पुष्पगन्धद्रव्यविशेष उत्पादितः । पश्य !

(इति तन्व्याः कुप्याः तमङ्गुल्या किञ्चिदादाय तन्नासिकानिकटे प्रदर्शयति । स च तमाघ्राय साह्लादम्)

रहिम्—सत्यं चतुरा भवती तत्तत्कल्पने । किन्नामायं गन्धः ?

इ. बी.—कथं वा त्वं मन्यसे ?

रहिम्—नोत्प्रेक्षितुं शक्नोमि भवत्या मेधाम् । भवत्येव कथयतु ।

इ. बी.—'अत्तर् जहाङ्गिर्' इति कुमारनामैव अस्य दत्त्वा पुत्रीहस्तेन तद्वस्तं प्रेषयम् ।

रहिम्—साधु, साधु। पण्डिता भवती घटनासु। महच्चातुर्यमाविष्कृतं भवत्या। मिहिरुन्निसावशस्सलीं भवेदिति नास्त्यत्र संदेहावसरः। तथापि कष्ट एव स्यादयं विषयः। पश्य, कुमारस्य हिन्दुभार्या तु अनन्यसाधारणीं लक्ष्मीं बिभर्ति। अपरोऽयमस्यां भारतस्त्रीजनानुरूपः अन्यत्र अदृश्यो गुणः सौजन्यं नाम। तत्कथं नाम बलवन्न रज्यत्वस्यां कुमारः, कथं नाम स तिरस्करिष्यत्येनाम् ?

इ. बी.—अत एव सुकरोऽयमावयोः प्रयोगः। यदेषा हिन्दुयोषा अवधीरितापि गुणमेव बहुमन्यमाना भर्तृचरितमविचारयन्ती न नः प्रतिबध्नीयात् कर्ममार्गम्। स्वस्त्यस्तु, अवहितः साधय सर्वम्। पुनः पश्यावः।

(इति इस्मद्बीगं निष्क्रान्ता।)

रहिम्—इयमेषा न केवलं गन्धपेषिणी, अपि च समर्था कार्यपेषिणी च महते उपकाराय मेऽद्य। जाने, न तावत् भवत्या वर्तते कुमारो महाराज इति। आविष्करोति च मह्यं प्रियसुहृदे, तदा तदा पितरि वैरस्यम्। अहो सिद्धिर्वृणुते माम् !

सलींप्रभौ राजपदे प्रतिष्ठिते
  तदास्य मे तत्परमोपकारिणः।
अहो स्थितिः ! किं किमहो न भुक्तये
  भवेन्मम श्रीः, सफला जनिर्मम ॥ १ ॥

(इत्यानन्देन घूर्णमानो निष्क्रान्तः।)

(इति विष्कम्भकः।)

(ततः प्रविशति संभ्रान्ता इस्मद्बीगम्।)

इस्मद्बीगम्—धिक्, प्रमादः प्रमादः ! अद्यैव कः को मनोरथो नोपलालितो मया रहिंखानेन सह ! सर्वमेव भग्नमद्य ! एनामन्तःपुरे परमप्रेम्णा नारीभिरखिलाभिरपि, तया

च युवराजपत्न्या भट्टिन्या च लाल्यमानां, 'काप्यसौ परिचारिका प्रमुग्धतपस्विनी' इति अवधीरयन्त्या मया महान्प्रमादः कृतः । इदं चाद्यैव मे स्फुरति । कुतोऽस्यां भट्टिन्या एवंगता प्रीतिः ? कुतोऽयं तस्यापि महाराजस्य तस्यामीदृशं वात्सल्यम् ? यदा पुनः श्रुतं 'तया नर्तक्या अनार्कल्या आगामिनि नृत्तोत्सवे नर्तितव्यमिति महाराजस्य महदुत्कण्ठा' इति, तदा नालोकितेयमन्तःपुरे, वर्धमानप्राधान्या, 'कोऽयं सेवाजनो मया सह संघर्षाय' इत्युदासीनया मया। अद्य भट्टिन्या युवराजस्य यथापूर्वं मदीयदुहितृहस्तेन प्रतिरात्रि क्षीरपानादि प्रेषयन्त्या, कुतः अकाण्डे अनार्कली तद्व्यापारे नियोजिता ? धिक्, धिक् ताः सखीमुखाच्छ्रुताः अनार्कलीप्रशंसावाचः ! 'अनार्कली, अनार्कली'ति आह्वानमपि अनुसन्दधत्या महान् मे हृदयदाहोऽद्य जृम्भते। (किमपि ध्यात्वा) इयं उद्भिद्यमानयौवनश्रीः, इतस्ततश्च सञ्चरन्ती, श्वोऽपि बहिर्नृत्ते विलसन्ती चपलस्य युवराजस्य दृष्टिपथमवश्यं गच्छेत्, मदीयायाः पुत्रिकायाः प्रतिद्वन्द्विनी, प्रतिबन्धिनी भवेदेव ।

(नेपथ्ये नूपुरशब्दः)

(सावधानं श्रुत्वा) पदभूषाशिञ्जितमिदं स्त्रियमागच्छन्तीं निवेदयति । (निरूप्य) हन्त ! इयमनार्कली आयाति सलीमशयनगृहाभिमुखी तदीयमपानाद्युपहरन्ती । अत्र *अन्तर्हिता भूत्वा निरूपयिष्यामि सर्वम् । (इति तिरोभवति ।)*

(प्रविशति यथानिर्दिष्टा अनार्कली ।)

अनार्—अये दुष्टहृदय ! दुराशया किमेवं मां व्यथयसि ? कुतस्सेवकजनस्य एतद्भाग्यम् ? सत्यं बलवदेव मयि रज्यति सलीम् । तमनुबद्धभावावर्जितमपाङ्गं तदीयमनुभाव्य अनुभाव्य मुहुर्मुहुः रोमाञ्चैस्स्वेदैश्च स्तब्धाङ्गी

निर्निद्रम् अनयं निशाम्, दिवा च कार्येषु स्खलामि। तमेतं कर्मण्यसमाधिं मयि न्यस्तेन निसर्गप्रेम्णा न पश्यति भट्टिनी। हन्त! कियती तस्या मयि प्रीतिः? कियदुपक्रियतेऽद्य तया, मां पानाद्यैः सलीम्-सकाशं प्रेषयन्त्या। अहो धिङ्, मां कृतघ्नीम्! सदाचारक्रूरस्यास्य महाराजस्य, अस्या वार्त्ताया गन्धस्याप्युपलंभे, किं स्यान्मे तपस्विजीवितस्य? अस्त्यन्यदपि अत्र महते विघ्नाय। बोधयन्ति मां सख्यः—मयि अकारणमत्यन्तमीर्ष्यालुं मिहिरुन्निसां, तदीयां जनन्मातरं च विशेषतः। युवराजान्तिकं पूर्वमिव मिहिरुन्निसाम् अप्रेष्य, मां तदीयव्यापारे न्ययोजयदित्येतेन, वर्तमानात् बहुमानात् च्युतिमात्मनः पश्यन्ती, असूयत एवैषा। (किञ्चित्तूष्णीं स्थित्वा) भवतु, (परावृत्य पश्यन्ती) एतत्पुरो वर्तते मनोहरं मत्प्रियवेश्म। अहो अद्य मे संपदियं, यत्कान्तं पुनरपि द्रष्टुं प्राप्तावसरास्मि।

(इति निष्क्रामति।)

(प्रकटमागत्य)

इ. बी.—किं किम्? 'पुनरपि द्रष्टुम्'! किमिदं सत्यं यदेतया मुग्धया प्रलपितम्? अप्यासीदेतस्या हतायाः चपलेन तेन सह पूर्वमेव संगमः? किन्नामेदं, यदेतावता कालेन निश्चितप्रायमेव स्वस्यामावेदयतीयं युवराजम्! अहो पुरुषाणां प्रेम! वञ्चितैव केवलं मदीया तनूजा। किमिदं सर्वं मृषा यद् युवराजः मम पुत्रिकायाः विलासवागुरायां गृहीत एव, मम पुत्रिवागुरायां ग्रहणं प्राप्स्यत एवेति निर्णीतबुद्धिरहमेतावत्कालमासम्। धिङ् मां मनोराज्ये प्रमाद्यन्तीम्! (चिन्तयित्वा) अथवा, किं ममापि निर्वेदः? अयि मुग्धे, किं मामप्यतीत्य काचित् वर्धते? गच्छ शयनागारं युवराजस्य। एषास्मि सर्वं निगूढं विज्ञाय तवोत्सादाय स्थापनासूत्रं गृह्णती, प्रस्तौमि

तव दारुणोपसंहारं नाटकायोगम्। (पुनश्चिन्ताविष्टा) एष अनार्कली-युवराजयोः रागवृत्तान्तः प्रकटमुद्घाटनीयः, भङ्क्तव्यश्च भट्टिनीसाहाय्येन। (सचिन्तम्) अथवा न निवेदयिष्यामि भट्टिन्यै। श्रुत्वापि भर्तुरविनयं, दृष्ट्वापि सपत्नीं, स्वोल्लङ्घनं सहमानाः, क्लेशमेव धर्मं मन्वाना इमा भारतीयाः सहधर्मचारिण्यः। अकबर-महाराजो ममात्र परमोपकाराय कल्पिष्यते। अतीव धर्मचण्डोऽयं न सहिष्यते तनये, भविष्यति चक्रवर्त्तिनि परिचारिकागतं कामचापलमीदृशम्। अन्ततस्समुन्मूलयितव्यः शत्रुरप्येष तात्कालिकोपकाराय उपयोज्य एव। कण्टकेनैकेन कण्टकान्तरमुद्धृत्य कृते कार्ये उभयमपि प्रक्षिपति प्राज्ञो जनः।

(इति निष्क्रान्ता।)

॥ इति पञ्चमोऽङ्कः ॥

## ॥ अथ षष्ठोऽङ्कः ॥

[युवराजप्रासादः। प्रविशति सलीम्]

सलीम्—हन्त! प्रदर्श्य, प्रलोभ्य, अप्रयच्छन्निमान् विषयान्, मर्मणि प्रहरति, करालं दिष्टम्! धिगपौरुषं मानुषं जन्म! शिशव इव खलु वयं विडंब्यामहे।

हस्ते करोति कूटेन प्रेम्णासौ विषयान् विधिः।
क्रूरं प्रहसदास्येन सद्य एवाच्छिनत्ति तान् ॥ १ ॥

तामनार्कलीं तदा उद्याने दृष्ट्वा, ततःप्रभृति अप्रभवन्नात्मनः, यतमानोऽपि न पारयामि प्रियामेकवारमपि वीक्षितुम्। यस्मिंश्च संगीतके, शृणोमि, सा नृत्ताय बहिरेष्यतीति, तदपि श्वःसायमिति कथमुत्सहे तावत्पर्यन्तमात्मानमन्तर्धस्मरात्स्मराग्नेरभिरक्षितुम्? अयि हतविधातः! एतादृशं सौन्दर्यं, हेम्नः परमामोदेनेव कलाविज्ञानेन योजयता, त्वया नूनं मर्मवेधी विषदिग्धः शरः कल्पितः। अत्यन्तकृच्छ्रेण खलु रक्षितो मया इङ्गितः मदीयभार्यायाः, यदा सा मत्पुरः अनार्कल्याः संगीतपाण्डित्यमत्युक्तिभिः प्रशशंस। कथं नु खल्वेनामत्युदात्तशीलामप्राकृतसुषमां भार्यामवधीरयामि? युक्तं प्रशस्यन्ते धर्मदेवताः अमूर्भर्तृत्तवध्वः।

श्लिष्यन्ति चन्द्रिकेव क्लिष्टेऽपि न विकुर्वते पत्यौ।
स्वैरेच्छासाम्राज्याद् धर्मे कष्टं तदिष्टमेवासाम् ॥ २ ॥

मयि स्खलत्यपि अविनयप्रकृतौ, सत्यमेषा देवी गृहलक्ष्मीरिव राजमाना, न शीलविसंवादं दर्शयिष्यति। तदपि भिक्ष

माम अनरालप्रेमबन्धनामप्येनां वञ्चयन्तम्। धिक् धिक् पुरुषस्वभावं चापल्यायैव दत्तशरणम्!

> मुहूर्तमस्यामपरत्र कंचित्
>
> कालं खलं खेलति मानसं नः।
>
> नवं नवं वीक्ष्य समुन्मिषन्तो
>
> मनुष्यकामा मधुपोपमा हि॥ ३॥

(विचिन्त्य) सदेव सर्वेषामप्यस्माकं परोक्षवेदान्तविप्लुतात्मनाम्, अतीते कष्टे, आगमिष्यति वा पापे अस्त्येव जेतुं पर्याप्ता धर्मचिन्ता। प्रत्यक्षं स्पन्दमाने तु विषये, विषय एव जयति सन्नधेर्मानिस्मान्। (परिक्रामन् सचिन्तम्) अपि पुनर्विलोकयेत सा? अथवा कुतस्तादृशो भाग्यव्यतिकरो मे? तच्चिन्तैव पारणा नः संप्रति धारणाय। बलवान्खल्वस्या अपि मयि भावावेशः। मुग्धं मनोमदनं तस्यास्तदाननमद्यापि प्रार्थनादीनं मदक्षणः पुरत उल्लसति। कथं विधिवैधेयेन प्रथममेव ममेदं रत्नं नार्पितम्? कुतो वा, एवंविधमपि कुसुमं म्लायतु सेवाक्लेशानौचित्येन कोणेषु!

> विषमां दारुणामन्ते धिक् देवस्य व्यवस्थितिम्।
>
> गुणास्सीदन्ति, मरणं शरणं समभावयोः॥ ४॥

अयमपरोऽद्य व्यतिकरः मिहिरुन्निसा नाम। कृतसंकेतानीवाधुना कृच्छ्राणि नः। अग्निमुपर्युपरि प्रध्माय खलु परीक्षतेऽसौ मनुष्यः। सेयमद्य क्षीरपानीयार्थेरिह आगत्य हताभिः स्वविलासचातुरीभिरचिरान्मां व्यशयिष्यति। किंचिदिव दत्तप्रत्यया सा भूयोऽपि अनार्कलीनिबद्धं मम हृदयमजानती, मामात्मानं च क्लेशयिष्यति। कथं दृष्ट्वापि सुधां, नीरे, क्षीरेऽपि वा रज्यतु चेतः? अनुभवोऽद्य विशदयति अपूर्वोऽयमचर्वितपूर्वो भावः अनार्कलीगतः। देव्यां वा मत्तकाशिन्यां मिहिरुन्निसायां

वा नाभूदेव एतादृशो मनोभावः। इमम् उद्घुष्य संप्रति किंचित्, असाक्षात्कारदौर्भाग्येन पुनरप्यदर्शनमेष्यति प्रेमवासना? भुनक्त्येव भोगशेषान्पुरुषः। अथवा भुनक्तीति को निश्चयः? करगतम् अप्राप्ताधरं च्यवत एव बहुल। (परिक्रामन्) वातायनमिदं, तया तदा अध्यासितपूर्वमुद्यानोद्देशं नेत्रयोः प्रथमत्, सुहृदिव समाश्वासयति। सत्त—

तडिदिव हृदयं वेगात् क्षणमभिताड्य क्षणादेव।
अपुनःप्राप्त्यै याता भाग्यश्रीर्मे च नादिरा सा च ॥५॥

आमन्त्र्य मां चलितुमात्तपदा समुत्क-
मावृत्तकोमलगल परिवर्त्तितान्तम्।
भुग्नोत्तरोच्चवपुषा यमदादपाङ्गं
किं स्यात्स एव चरमो मयि दिष्टशून्ये ॥ ६ ॥

(दीर्घं निःश्वस्य) अनार्, अनार्! आयाहि मे हस्ताभ्यन्तरम्!

(ततः प्रविशति चटुलं परितो वीक्षमाणा सानन्दा अनार्कली।)

अनार्—(दीर्घं मुहुः निःश्वस्य) अहो मे भाग्यम्! भवतु, अविज्ञातं मन्दमुपसर्पामि। मामुद्दिश्यैवैष मुक्तकण्ठम् उन्मना वर्तते प्रेयान्।

(इति मृदु तदीयमन्तिकं उपसृत्य तिष्ठति।)

(सलीम् सनिर्वेदं परिक्रामन् अपश्यन्नेव हस्तेन अनार्हस्तस्थितानि पात्राणि अभिहत्य पातयति।)

(झटिति साश्चर्यस्तिमितं वीक्षमाणः)

सलीम्—अनार्, अनार्! किं त्वमेवासि? (तमपाङ्गयन्ती सा तिष्ठति।) किं सत्यमेव प्रियामुपलब्धवानस्मि? उतेयं उत्कण्ठाकृतैव माया?

अनार्—नहि, सत्यं भट्टिन्या मिहिरुन्निसास्थाने त्वत्सकाशं प्रेषिता अनार्कल्येव। (संभ्रान्ता अधो विलोक्य) कथम् अनवधानया मया तव उपनीतं पानीयमवपातितम्?

सलीम्—सत्यं ब्रवीषि प्रिये! (इत्यंसे एनां गृहीत्वा) सत्यं मिहिरुन्निसास्थाने प्राप्तासि। भट्टिन्याः स्थाने चेति वक्तुमिच्छामि। अलं नष्टक्षीरचिन्तया।

अनार्कलि! तव प्राप्ते फुल्लानार्कलिकाधरे।
ओष्ठामृतरसे, कैयं क्षीरासवविडंबना॥ ७॥

अनार्—आर्यपुत्र, त्वच्चिन्तासमाधिलयेषु मध्ये मध्ये प्रादुर्भूय महाराजो भट्टिनी च मां भीषयतः। अपि च बिभेमि, यदा प्रभृति सखीभ्योऽशृणवमुत्कटया असहिष्णुतया इत्सद्बीर्गं मयि वर्तत इति। अस्मिन् काले, अत्र विलम्बमानां मां सत्यमन्यथाशङ्किन्यः शुद्धान्तस्त्रियः परिवदेयुः। अपि च यः कोऽपि यदि मामत्र त्वया सह वर्त्तमानां जिघ्रेत्, निवेदयेच्च प्रकाशं, किमापद्येत?

सलीम्—अयि भीरु, प्रिये! अलमेतैराशंकितैः। निर्मक्षिकं नेति किं नोपभुज्यते मधु? आवयोस्सिद्धिविघ्नः स महाराज एव वा भवतु, न हि न प्रभवामि। युवराजोऽयं नात्र प्रासादे सेवकः। अपि च (तां हस्तेनादाय) सुन्दरि! एहि!

यदेव प्राप्यते कृच्छ्रात्तदेव परमं सुखम्।
वियोगविघ्नकष्टानि विना, पुष्टी रसस्य का॥ ८॥

(इति निष्क्रान्तौ)

॥ इति षष्ठोऽङ्कः॥

## ॥ अथ सप्तमोऽङ्कः ॥

(ततः प्रविशति सलीम्, रहिम् खानेन अनुसृतः ।)

सलीम्—रहिम् ! अथ किमिति कथयसि ?

रहिम्—स्वामिन् ! बहवोऽत्र प्रासादे सेनायामुपजापसहाः। भवता च भूरिकोशदानेन अनुगृह्यमाणस्य मे सेत्स्यत्येव भेदः सैनिकेषु ।

सलीम्—किमिदं प्रस्तूयते ?

(इति यथापूर्वं उत्सुकमनवहितं च संचरति ।)

रहिम्—ननु युवराजस्य मनोरथ एव । युवराजं बहवो वयं महाराजं द्रष्टुमिच्छामः । अत्र च अन्तःपुरे गन्धकारिणी मिहिन्निसामाता इस्मद्बीगं निपुणतर-प्रयोगशीला आनुकूल्येन तवार्थे बद्धकंकणा वर्तते ।

सलीम्—(किञ्चिदिव सकोपम्) ननु पृच्छामि, रहिम्, किमिदं कथ्यत इति ?

रहिम्—विषयान्तरसक्तहृदय इव युवराजः ।

सलीम्—सम्यगनुमितं कुशलेन त्वया ।

रहिम्—अलमल्पैरात्मानमायास्य । ननु वर्त्तयामि महतीं राज्यतन्त्रकथामधुना ।

सलीम्—(सजुगुप्सम्) राजतन्त्रकथा !

अलं सिंहासनारोहसाम्राज्यादिकमन्त्रणैः ।<br>
अद्योपक्रियतां मह्यमनार्कल्या अवाप्तये ॥ १ ॥

रहिम्—ननु तदर्थमेवायमारम्भः भवतस्स्वैरोपभोगसंपादनाय। स्वतन्त्रे भवति न केवलमेका अनार्कली, शतं तादृश्यः, ततोऽप्यधिकसौन्दर्याश्च सुलभाः। अद्य खलु सर्वकर्मसाक्षिणा धर्मनिष्ठुरचक्षुषा शृङ्खलिते भवति का नाम अनार्कल्यादिचिन्ता? धनमाहृत्य हि भूषणानि क्रेतव्यानि।

सलीम्—तत्किमिदाद्य त्वया चिकीर्ष्यते?

रहिम्—त्वयैव तावत् चिकीर्षितव्यम्।

सलीम्—धिक् त्वां, कथय। अद्य शीघ्रं गन्तव्यो मया सभामण्डपः।

रहिम्—(मन्दं) कोशः.........।

सलीम्—भवतु।

(इति निष्क्रान्तः।)

रहिम्—अहो अखिलभारतचक्रवर्तीभविष्यतः पुरुषस्य सेवककुमार्यामावेशः। किं क्रियताम्? अयं च नः प्रयोगालम्बनम्। उपायश्च नरिसद्धौ सा गृध्नुः युवितमती मिहिरुन्निस्सामाता। युज्यते च तामेव मिहिरुन्निस्सां स्वस्मिन् सिंहासनमारूढे महिषीकर्तुम्। अपि च न मन्ये अनार्कलीतः परिहीयते सा सौन्दर्ये। अथवा नात्र युक्तिर्युज्यते। न सौन्दर्यं कारणम्। मनोवृत्तिः स्वैरिणी अपर्यनुयोज्या, विशिष्य प्रभूणाम्। परं च युवराजोऽयं महाराजस्य केवलम् औरसः पुत्रः, आचरणे तु अस्मन्मित्रं, परं ललितप्रकृतिः। अद्यानुरोद्धव्य एवैषः। तद्यथातथा प्राप्ते राज्ये, अपहृतायां च उपायेन अनार्कल्याम्, अचिरात् प्रत्यवस्थितः, स्वयमेव मिहिरुन्निस्सायाम् इतोऽपि रभसतरमभिनिवेशं प्राप्स्यति। अद्य कालानुरोधेन मया कोशं तत आदाय साधयितव्यं कार्यजातम्।

(इति निष्क्रान्तः।)

(इति विष्कम्भकः।)

(ततः प्रविशत्यनार्कली)

अनार्—हा ! कथं अद्य प्रभाते अन्तःपुरेण अखिलेनापि मे शरीरं निध्यातम् ? कृच्छ्रं यतमानापि न पारयाम्याभ्यः प्रमदाभ्यो निगूहितुम् अवचोमुखरैरङ्गैः उद्घोषितं मदीयं रहोवृत्तान्तम् । क्रूरतरमद्य प्रातर्माम् अपाङ्गयामास इस्मद्वीगम् । किं तं प्रियतममनुचिन्त्य हृष्यतु मे हृदयम्, उत विषीदतु, बिभेतु वा कौलीनसंभवं श्रुत्वा। नास्त्यत्र विश्वास्यः कोऽपि परमो मित्रजनः, येन विभजामि दौर्मनस्यं मे ।

(सचिन्तम्) हन्त ! किमेतादृशभागधेयानि ममापि सन्ति ! किमेतदेकदोपनतं भोगसाम्राज्यं पुनरपि मे संभविष्यति । कथयत्यसौ प्रेयान्—'निभृतप्रयोगिभिः मित्रैः महाराजमवरोप्य स्वयं सिंहासनमारोढुं प्रयत्नवानस्मि, अचिरात्त्वां महिषीं मे करिष्यामीति । अहो अतिधावनं मनोरथहयानाम् ! अहो गन्धर्वनगरस्वप्नायितानि !

(पुनश्चिन्तयित्वा) हन्त, अपकारिषु क्रूरः खलु महाराजः श्रूयते । कुतोऽस्य मे प्रियस्य स्वसौगुण्यमित्रीकृतसकललोके महीपतौ सिद्ध्याशंसा ? कथं नाम अस्मिन्नपि महाराजे कोऽपि विरज्यतु । मय्यपि सेवकजने मदीयनृत्तगीतव्याजेन असाधारणं प्रेम बिभर्ति । अथ यदि मामपि पुत्रपक्षगताम् आशङ्केत, ततः का मे गतिः ?

(ततः प्रविशति सङ्गीताचार्यः पुण्डरीकविट्ठलः ।)

पुण्डरीकविट्ठलः—परम्परागतविशुद्धविद्योऽस्मि, लब्धप्रतिष्ठोऽस्मि च लक्ष्यलक्षणयोः गीतनाट्ययोश्च । कर्णाटकसंप्रदायकुतूहलिना महाराजेन कृतसमादरोऽस्मीति बहवोऽत्र राजसदसि उत्तरापथीय - पारसीकादि - संप्रदायानुसारिणः कलाकाराः ईर्ष्यापहृतसद्वस्तुरासिक्याः पौरोभाग्येन मे न्यक्कारमापादयितुमवसरमुत्पश्यन्तो वर्तन्ते । अद्य इदं-

प्रथमतया महाराजस्य पुरतः मया प्रयोगः प्रदर्शयितव्यः। प्रयोगप्रधाना च नो विद्या, ततो गरीयसोऽपि गुरोर्गौरवं प्रयोक्तृशिष्यगुणाधीनं भवति। तत् प्रयोगात् पूर्वमेव अनार्कलीं दृष्ट्वा सर्वं चतुरस्रं वर्तते वा इति द्रक्ष्यामि। (परिक्रम्य) इयं सा शिष्या! कथमद्यापि अनाकलितनेपथ्या किमपि अन्यचिन्ताक्रान्तेवोपविष्टा लक्ष्यते? भवतु, उपसर्पामि। (उपसृत्य) अनार्कलि!

अनार्—(सहसा उत्थाय) क्षाम्यन्तु गुरवः।

(इति साञ्जलि तिष्ठति।)

पु. वि.—वत्से! अपि सर्वेष्वङ्गेषु अवधानवती असि? सर्वमप्युपदिष्टं मनसि धार्यते? कीर्तिर्वापकीर्तिर्वा, सर्वमद्य त्वदायत्तं मे।

अनार्—गुरोः प्रेम्णा प्रसादेन च कीर्तिमेव आहरिष्यामि।

पु. वि.—आगमनसमये किमपि चिन्तान्तराविष्टामिव त्वामपश्यम्।

अनार्—(किञ्चिद्विलम्बमानेव) नास्ति किमपि।

पु. वि.—अप्यद्य प्रातः प्रयोज्यवस्तुनोऽभ्यासः कृतः? अपि प्रसन्नान्तरङ्गासि?

अनार्—मास्तु कापि शङ्का आचार्याणां मनसि।

पु. वि.—अद्यापि अनलङ्कृतां त्वां दृष्ट्वा मन्दोत्साहामिव तर्कयामि।

अनार्—नास्ति तादृशं किमपि। स्वस्थचित्तं भवद्भिः सदो गम्यताम्। क्षणेन सज्जा भविष्यामि। इत आगच्छत्येव सखी नेपथ्यविधानेन।

(नेपथ्यविधानेन त्वरया प्रविश्य)

सखी—सत्यम् अनार्, सत्यं, न केवलं महाराजः, सदस्यः सर्व एव मत्तः आलिखित इव भविष्यति। (अनार्कलीम्

आलिंग्य गाढम्) अनार्, तव संगीतकचातुर्येण तरलीकृतो महीपतिः त्वामद्य युवराजाय स्वयं प्रतिपादयिष्यति। अहो भाग्यं ते!

अनार्—(सविषादम्) सखि, अलं परिहस्य। महाराजमनुध्याय तप्यते मे मनः। आकल्पमानय। एह्येहि, आमुञ्च।

(सखी अलङ्करोति।)

सखी—हला! नृत्तामुखे त्वं किमित्येवं तान्तेव आलक्ष्यसे? अतीव मृदितम्लाना मञ्जरीव ते तनूर्विभाति।

अनार्—(स्वाङ्गं निध्यायन्ती मूका तिष्ठति।)

सखी—अलमात्मनो हृदयानन्तरेऽप्यविश्वस्य।

अनार्—हला! किमत्र गोपनाय त्वत्तोऽपि? नूनं विडम्बयति मां दुर्दैवमपूर्णमिव परिहरन्ते भाग्यम्।

सखी—भवतु, ज्ञायते। युक्तं वेपते ते हृदयम्। अनार्! अविसंवादिन्यपि युवराजचरिते, अन्तःपुरपिशाचिकेयं जरती इस्मद्बीगं परमोद्वेगहेतुः चिन्तनीयैव।

अनार्—हला! अपि लक्ष्यते भट्टिनी यतः कुतश्चित् आघ्रातरहस्येति?

सखी—अनार्, भाग्यवत्यसि, एवंविधां भट्टिनीममानुषशोभनशीलामासाद्य। श्राविताषि न झटिति रोषं वा पापं वा करिष्यति सा। भर्तुरप्रतिकूलां तामालम्ब्य न किमपि सेत्स्यति नः कौटिल्यमिति इस्मद्बीगम् अन्यत्रैव व्याप्रियत इत्यनुमिनोमि।

अनार्—(सभयकम्पम्) अपि महाराजस्य कर्णं दशति?

सखी—हला, अलमाशङ्काभिः। न तावद्बाह्यप्रकृतिः सुलभविकारो वा असौ महाराजः। गभीरात्मनः उदारसच्चरितव्यसनिनः, विशेषतः त्वयि आशैशवोपचितप्रीतिभरितस्य,

संप्रति ततोऽपि तव नृत्तचतुरिम्णा चमत्कृतचेतसो महाराजान्न किमपि भेतव्यमस्ति ते। अङ्ग! सुष्ठु, तिष्ठ। सफलीकरिष्यामि नयने मनःप्रसादिनीं लक्ष्मीं तव अनुभाव्य। अहो ते कान्तिः! अनार्!

कौमुदीव तवाङ्गेषु लावण्यं लम्बते सखि।
चन्द्रानने वपुष्येताः भूषास्तारोज्ज्वलास्तव ॥ १ ॥

सत्यं चकोर इव माद्यत्यस्मिन् तव तरलिम्नि युवराजः। (अनार्कली पुलकिताङ्गी तिष्ठति, आत्मानमनुसंदधाना।) अयि, युवराजशब्द एव पुलकयति ते शरीरम्! अद्य महाराजप्रसादनार्थं युवराजप्रमोदार्थं च द्विगुणीभविष्यन्तीं ते लास्यचातुरीमनुभविष्यन्तीनामस्माकं चिराज्जन्म सार्थकं भविष्यति। (अनार्कल्या हस्तमादाय) हला! किमेतदङ्गुलीयकमुत्स्फुरत्प्रभाजालजटालम्?

अनार्—एतदेव खलु मदीयभाग्यलक्षणं प्रमोदेष्वपि तदा तदा मदक्षिपथे चरत् शोकेन कल्माषयति माम्। आदिष्टकष्टदिष्टाया मे, मातैतद् दत्तं व्यसनोत्कटयविमोक्षोपायभूतमङ्गुलीयकम्।

(इति विषण्णं तत् पश्यति।)

सखी—हला, ईदृशा अपि आकृतिविशेषा विपत्त्यनलेन प्लुष्यन्त इति धिक् स्वातन्त्र्यपैशुन्यं दुष्टदैवस्य!

म्लायन्ति पुष्पाण्यपि गन्धवन्ति
लोकप्रियः क्षीयत एव चन्द्रः।
परस्परं प्रेमवतां न योगो
धातुः पुरा कोऽपि न बुद्धिदोऽभूत् ॥ २ ॥

अनार्—सखि! बालापि जानामि किमपि स्वभावतः। किं दैवोपक्रोशनैः? कृतं भुज्यते। अत्र यदर्हा वयं, तद् अवश्यं भोक्ष्यत एवास्माभिः कालान्तरे। नेह नाशोऽस्ति

स्वल्पस्याप्यस्य कर्मणः। आपदेऽपि, सेवकजनस्य अनुचितेऽपि निराशा निष्ठुरं युवराजे विवशं वासनात इव आक्षिप्य निक्षिप्तहृदयाहम् अव्याजम् अनन्यचिन्तं, वियोगदावानले जुहोम्यात्मानम्। हला, अतिबलवत्खलु बाधते मां नैराश्यम्। अतीव मयि प्रियस्य सोऽभिनिवेशः मामाश्वासयति क्षणं, क्षणं च वियोगविषेण मूर्च्छयति माम्।

परस्परप्राप्तिनिराशमृत्युर-
प्यमुष्य शोकस्य शमाय कल्पते।
द्रुतं मृतिर्मेऽस्तु यथान्यजन्मनि
ध्रुवं तमेवाविरहं प्रियं लभे॥ ३॥

सखी—अलमेतैः दुर्निमित्तानुचिन्तनैः। ननु विश्वसुन्दर्यसि। चतुरचरणा च। अत्येति नृत्तारम्भकालः। महाराजसभा पूर्वमेव संमिलितेति मन्ये। साह्लादं वह मानसम्। सत्यं तादृशप्रेम्णोऽनुरूपं नृत्तवैदग्धीहृतचेतसो महाराजस्य अनुग्रहपात्रं भविष्यसि। आगच्छ।

अनार्—सत्यं सखि, वर्षान्तनभ इव मे हृदयं ताम्यति, हृष्यति च। हला, सत्यं युवराजोऽपि सभायामास्ते?

सखी—हूम्! एहि, एहि।

(निष्क्रान्ते।)

॥ इति सप्तमोऽङ्कः॥

## ॥ अथ अष्टमोऽङ्कः ॥

(प्रासादे संगीतमण्डपः। ततः प्रविशति सिंहासनासीनः सलीम्-सहितः सपरिवारः अकबरमहीपतिः।)

अकबरः—कथं चिरायते अनार्! सलीम्! त्वया न दृष्टा अनार्। न जानासि ताम्। सा माता वियुक्ता शैशव एव मया अन्तःपुरमानीता, वर्धिता च अव्याजप्रेम्णा मया। प्रथमं त्वन्मातुः, ततो मे हिन्दुस्नुषायाश्च प्रत्यनन्तरसेवायां नियुक्ता। नादिरेति पूर्वमाहूता, अद्य अवस्थानुरूपं अनार्कलीति अवरोधे बहिश्च आहूयते।

(सलीम् अन्तः प्रहृष्टोऽपि इङ्गितं रक्षन् मूक आस्ते।)

अकबरः—बीरबर, तानसेन! हेम्न आमोद इव आश्चर्यभूता संगीतसंपदपि तस्यां विलसति।

तानसेनः—श्रुतमेव पूर्वं दाक्षिणात्यस्य सङ्गीताचार्यस्य समागम-समये।

बीरबरः—आदिष्टं च तदा महाराजेन-तेन दाक्षिणात्येन विदुषा पुण्डरीकविट्ठलेन, अद्य प्रदर्शनार्थम् अनार्कली किमपि नूतनं दाक्षिणात्यं नृत्तं शिक्षयितव्या इति।

अकबरः—सम्यक् संबोधितोऽस्मि।

बीरबरः—स पुण्डरीकविट्ठलश्च सज्ज एव मेलेन सह। पश्यतु महाराजः, उपविष्टावेव वैणविको मार्दङ्गिकश्च।

तानसेनः—विट्ठल! निवेदतां महाराजः—किं गास्यते, किं नर्तिष्यते, किम् अपूर्वं वस्तु अनार्कली भवता शिक्षिता चेति।

पुण्डरीक विट्ठलः—महाराज! रसिको राजा मानसिंहो निकट-वर्ती निकषोपलो मे एषु विषयेषु। तद्धृदयमनुसृत्यैव मया

प्रबन्धो रचितः, रागतालनृत्तादि च योजितम्। स एव साहित्यसङ्गीतोभयस्तनंधयः सरस्वत्या विवृणोतु महाराजाय प्रस्तुतमभिनेययस्तु।

अकबरः—मानसिंह! प्रीतोऽस्मि ते रासिक्यं विदुषा स्तूयमानं श्रुत्वा। किमाह भवान्?

मानसिंहः—मा महाराजः आत्मनो रासिक्यं तनूकृत्य स्तोकं तोकं मां बहूकृत्य वदतु। ननु अधिराज्यम् अध्यात्मं च यथा, तथैव अधिविद्यं च सार्वभौमो भवान् नः परमं प्रमाणम्। इदं तु वक्तुमिच्छामि—

आदौ चाक्षुषसंगमोदितमहाकामं-वियोगानले
प्रक्षिप्यैष परीक्षते च कुरुते दोषान् प्रदह्यामलम्।
अल त्वामिलति क्रमेण करुणः - तद् विप्रलम्भो रसो
दैवांशोऽयमहो मृदुश्च परमस्वादुस्सचेतःप्रियः॥ १॥

तदेष एव रसराजोऽभिनयस्य परमो योग्यो भोग्यश्च गृहीतः।

अकबरः—साधु। सम्यक् प्रतिपादितं समग्रं काव्यतत्त्वम्।

(श्रूयते मञ्जीरध्वनिः।)

आगता अनार्कली। शरीरबद्धा भावसमृद्धिरिव भाति। अनार्, एहि।

(अनार्कली आगत्य मध्येसभं सलज्जा अधोमुखी तिष्ठति। महाराजमुपक्रम्य सर्वानपि सदोगतान् वन्दते।)

अक.—(पुण्डरीकविट्ठलमुद्दिश्य) आचार्य! प्राप्ता भवतः शिष्या, कौतुकोन्मुखी च सभा।

पु. वि.—इदं प्रारभ्यते सङ्गीतकम्। एहि अनार्कलि!

(अनार् मेलसमीपमेति)

पु. वि.—महाराज! अभिनेयवस्तुव्यक्तये प्रथमं मयैव खण्डशः पदमिदं गास्यते। कलिकामधुपयोः नायिकानायकसमाधिः। प्रतिखण्डं गानानन्तरम् अनार् तं खण्डं लयेन भावेन च योजयिष्यति।

अक.—को रागः?

पु. वि.—कल्याणी।

अक.—(तानसेनमुखं पश्यति।)

तानसेनः—अस्माकं यो 'इमन्' इति रागः, स एवैष दाक्षिणात्यः कल्याणीरागः।

अक.—अथ तालः?

पु. वि.—रूपकं नाम, चतुरश्रजातिकं च।

तानसेनः—महाराज! मन्ये त्र्यक्षरः, द्वादशमात्रिकोऽयं तालः।

अक.—साधु, प्रस्तूयताम्।

पु. वि.—(वेणुना मृदङ्गेन चानुगतः)

कलिका मधुकर! किमद्-
त्कलिकाकुलितेह ताम्यति तवार्थे।
ललितो वर्णो गन्धः
फलितोऽस्या वशयितुं न त्वाम्॥ २॥

लीनाऽत्र पत्रगहने
दूनाऽसौ कण्टकैः कृमिभिः।
हीना विकासलक्ष्म्या
दीना सीदति निजं विना मधुपम्॥ ३॥

रीङ् रीङ् रीङ् - इति मधुरो
रीङ्कारस्ते कुतोऽपि तामेति ।
त्वं तु क्वापि न दृश्यः
हन्तुं तां क्रीडसि क्रूर ॥ ४ ॥

अक.—साधु, तानसेन ! श्लाघनीयोऽयं वाग्गेयकारः ।

तान.—महाराज ! तथैव । अतिकुशलोऽयम् । अद्य पश्यामो गीतस्य नृत्तबन्धम् ।

अक.—अनार्कल्याः कौशलं च । अनार् !

पु. वि.—वत्से ! प्रस्तूयताम् ।

(अनार्कली सवाद्यं पुण्डरीकविट्ठलेन पुनर्गीयमाने गीते नृत्तमभिनयं च प्रदर्शयति ।)

(निष्पन्दे सदसि, राजनि च तदा तदा रसेन मुकुलिताक्षे सलीम्–अनार्कल्योः मुहुर्मुहुः नयनानि मिलन्ति । रहिम्खानेन चोद्यमाना इस्मद्बीगम् निभृतं राजानमुपसृत्य तत्कर्णे दशति ।)

अक.—(किञ्चिदिव स्वयं निपुणं पर्यायितो नर्तकीं कुमारं च निरूप्य, झटिति सक्रोधम्) तिष्ठ !

(अनार्कली सदसा सह वेपते ।)

अक.—कुलटे ! अपेहि ! कोऽत्र भोः ? आदाय बन्धकीमेनां कारागृहे प्रक्षिप । श्वः प्रभाते पुंश्चल्येषा भित्तिगर्भे निधाय व्यापाद्यताम् ।

(अनार्कली मूर्च्छिता सखीभिरपवाह्यते । तीक्ष्णं कुमारं कटाक्षयित्वा पराङ्मुखो भवति महाराजः । सभातो निर्गच्छति कुमारः । प्रक्षुभितास्सभास्तारा: मन्दंमन्द-

माननमुखं सभामुज्झन्ति। निःश्वसन् इतस्ततः सभाङ्गणे परिक्रामति महाराजः।)

अकबरः—अहो अतर्क्यदुष्टचेष्टिताः स्त्रियः! इतःपर्यन्तम् अज्ञातकौटिल्यगन्धा मुग्धमनोहरा या आसीत्, किं सैव एषा अनार्कली! अहो तारुण्यमोहमाहात्म्यम्! अयि! त्वयि न्यस्तस्य प्रेम्णः त्वमेवं कृतघ्ना प्रतिकरोषि! धिक् धिक्! प्रमदाप्रकृतिं स्वभावस्वैरिणीम्! अहो कियदेतत् परिचारिकाजनपरागस्य!

(पुनस्सकोपं चिन्तयित्वा) सलीम्! सलीम्! किमेतत्! किं त्वमेवैष भारतभूमण्डलस्य भविष्यच्चक्रवर्ती? अहो अस्य मम पुत्रस्य चापल्यम्! धिक् धिक् यौवनम्! मत्तमेतत् वयः। किमुपदेशैः? वृथैव विद्या। प्रमथ्य खलु विद्वांसमपि कर्षत्येतद् वयः। तत एव खलु बाल्य एवास्य कामोद्वेगज्वालाः शमयितुं, सत्पथेन शीलमानेतुं च प्रकृष्टाचारसुभगां हिन्दुसुन्दरीमेनाम् अयाहृषम्। धिगिदं वडवाग्निवदतृप्तं घस्मरं तारुण्यम्! कामस्रोतोभिः सहस्रधापि जृम्भमाणैरियं तारुण्यप्रावृड् उत्कूलम् उत्पथं विश्वतः प्रमथ्नाति। नैव गुरुनिरोधो, अन्यविधो यः कोऽपि निरोधो वा कल्याणाय कल्पेत। प्रत्युत पूर्वतोऽपि चण्डमेव भवति दौःशील्यम्। निरर्थ एव सर्वो बाह्यो निग्रहः। अन्तरेव सारता हृदयस्य सञ्चेमा। अहो, किमेतद् दौर्भाग्यं मे, भारतवर्षस्य च! यदेतद् मदीयं सिंहासनं कुलटाः परिचारिकाश्च अनुधावन् एष पुत्र आस्थास्यति। तदिमेऽपि कथं चापलविडंबिता अचिन्तयित्वा स्वीमां योग्यतामयोग्यतां वा राज्यभाराय कोलाहलं विदधते। ननु कृत्स्नो राज्याधिकारः इन्द्रियजयार्थो योगः।

(पुनस्सचिन्तम्) किमयोद्भिन्नमेवेदं सलीम्-अनार्कल्योः चापल्यम्? उत......

(पृष्ठतः इयत्कालं निगूढं स्थिता पुना राजानमुपसृत्य)

इस्मद्बीगम्—महाराज! नायं नूतनो युवराजपरिचारिकयोः चापल्यवृत्तान्तः। आसीत् प्राग् उद्याने कोऽपि संगमः। ह्यः पुनश्च निशि युवराजभवनं क्षीरपानाद्युपहाराय प्रेषिता अनार्कली। तदेवाद्य युवराजानन्दायैव, न तु भवदाज्ञानुपालनाय, तादृशम् अद्भुतनैपथ्येन अद्भुतेन संगीतकेन विलसितमनया।

(विमुखमेव एतावदेतत् श्रुत्वा, झटिति परिवृत्य सकोपम्)

अकबरः—का त्वम्? (इति क्रूरं वीक्षते; इस्मद्बीगम् नम्रा भूत्वा अपसरति।) अयि वृद्धपिशाचिके! गन्धमर्दनोपरचनव्याजैः अन्तःपुरे तव पुलिकावागुरां युवराजग्रहणाय विस्तारयन्ती चेष्टसे त्वमपि। हाः, अनार्कलीमपहृत्य, मिहिरुन्निस्सां युवराजाय प्रतिपादयितुमत्र उपजपसि! धिक् त्वाम्, धिक् युष्मान् स्त्रियः! (सकोपम्) कः कोऽत्र भोः?

(अ.फैसल् एतावत् सभयं दूरे स्थितवान् मन्दमुपसरति।) अमात्यवर्य, अस्या दुहितरं वङ्गभूमिसामन्तस्य भार्यां कृत्वा सदारिकेयं जरत्कुट्टनी सद्य एव वङ्गानपनीयताम्।

(निष्क्रान्तौ इस्मद्बीगम्, मन्त्री च।)

(चिन्तयन्)

अनार्, अनार्! कीदृक् धार्ष्ट्यं तव! मुग्धहरिणीव अन्तःपुरे विहरन्त्यासीः! उद्यानकोकिल इव सर्वप्रियं कूजन्त्यां त्वयि कियदश्लिष्यत् मे निर्व्याजं हृदयम्! धिगेतत्ते पापं तारुण्यम्! अपि नाम नैवोदितं स्याद् इदं ते स्खलद्भयः! अहो धिङ् मामपि धर्माग्रहेण त्वय्यपि क्रूराभिनिवेशम्।

अश्मसारमिदं नूनं मदीयं हतमानसम्।
मदीदृशकलारूपघाताय कृतनिश्चयम्॥ ५॥

अनार् ! कीदृशीं करुणां दशां नीतासि ! कथं तवाध्येया वञ्चनाविदग्धी, यदयं राजपुत्रो गर्तेषु आकृष्य निपात्यते। सलीम् ! हिन्दु-सूफी-साधूनां संपर्कं दिन्-इलाहि-दीक्षाम् अन्यत्सर्वम् एकपद एव विनाशितवानसि !

सिंहासनमिति नेदं स्वैरोपभोगाय, नैतत् चपलाशयानां प्रजाहिंसास्थानम्; परन्तु धर्मासनम्; नैतत् चिराय धर्मरोगिणो भोगिनो वा वशे तिष्ठति। अथवा

अलं परीक्ष्य, शलभं वह्नेः को नाम रक्षतु।
निर्वाण एव ज्वालानां क्षेमं पश्यामि नान्यथा॥ ६॥

(निष्क्रान्तः।)

॥ इत्यष्टमोऽङ्कः ॥

## ॥ अथ नवमोऽङ्कः ॥

(प्रविशति भग्नाननो रहिम्खान्)

रहिम्—कथमेकोच्छेदाय यत्यमाने सर्वमेव उच्छेदमाप्नोतीव ? कथमिदं नाम, मिहिरुन्निस्सा-माता सपुत्रिका निर्वासितेति श्रूयते ! एवमस्माभिः चिन्त्यते, अन्यथैव चिकीर्षता देवेन सर्वमेव विपर्यस्यते । मिहिरुन्निस्सा-मातुरसान्निध्यं अस्मद्राष्ट्रकलहोद्भेदनतन्त्रस्यैव मूलकीलभङ्गः। (चिन्तयन्) अथवा, अन्यतो वर्तमानापि महामतिस्सा नैव न कल्पते उपकाराय। यत्र कुत्र वा सा भवतु, नास्याः प्रकृतिः प्रयोगे अयुञ्जाना क्षणमपि वर्तेत। वङ्गदेशस्थितैव सामन्तपक्षेऽपि उपजापेन महते साहाय्याय भविष्यति। अद्य चिन्तनीयः पुनर्युवराज एव। तमनुवर्त्य साधनीयं सर्वम्। एष खलु आलम्बनम् अस्मत्क्रियायाः। सत्यं श्वः प्रातर्न द्रक्ष्यति जीवन्तीमेनां अनार्कलीम्। अयं पुनर्युवराजः तामभ्यवपत्य कुतश्चन तया सह पलायनाय कृतनिश्चयस्संप्रति कारागृहमेतत् मदीयसाहाय्येन प्रवेक्ष्यति। सर्वथा अनार्कलीम् अपवाहयन्तमेनं महाराजसैन्यं अनुसरिष्यति। तदा अवश्यं भाविन्यायोधने अनार्कलीप्रेमावेशो जीवितनिरीहं युध्यतः का नाम असन्दिग्धा जयाशंसा? कदाचित् जीवितं वा त्यक्ष्यतीति कथं न संभावितमेतत् ? अयं पुनरालंबनं नः प्रयोगस्य सर्वथा रक्षणीय एव। कोऽयमस्य चक्रवर्तिनः परिजने अस्यां ईदृशोऽभिनिवेशः।

इदं तनु त्याज्यमेव महत्तरफलेच्छया।
सिंहासनोपविष्टस्य सर्वाप्यस्य वसुन्धरा ॥ १ ॥

(कर्णं दत्त्वा) कथं पदशब्द इव ! तदयमयसन्नान्तरङ्गो युवराज आगच्छति कारागृहमुद्दिश्य । नाद्य अत्र विलम्ब-सहोऽयम् ।

(प्रविशति यथानिर्दिष्टो युवराजो रभसात् ।)

इत इतो युवराजः ।

(इति निष्क्रान्तौ ।)

(इति विष्कम्भकः ।)

(कारागृहान्तः प्रविशति शयाना अनार्कली । मन्दं विगतमूर्च्छा उपविश्य, शून्यं परितोऽपि पश्यन्ती)

अनार्—कुत्र वर्ते ? किमिदम् ! (अनुस्मारयन्त्यात्मानं, पुनश्च व्यामुह्य पतति, चिरादुत्तिष्ठति, इतस्ततः परिक्रामति) किमयं परितोऽपि मोहान्धकारः, उताद्य रजनी वर्तते ! कुत्र प्रक्षिप्तास्मि ? नैव सभामण्डपः। मदीयं दुष्टं दशान्तरमिव रूपवत् स्थलमिदम् । (सममवेदनं चिन्तयन्ती) अहो, तानि राजवचांसि स्तब्धाया मे चिरादद्य पुनर्मर्मसु घट्टयन्ति । धिङ् माम् अत्यल्पभागिनीम् ! अयि अदृष्टचर-नैष्ठुर्य, विधे, किमिमां विपत्तिमनुभवितुमेव सृष्ट एव जनः ? बाल्य एव मातरं मेऽपहरता कुतो नापहृता दग्धा एते ममापि प्राणाः ? अहो, दृष्टिं दत्त्वा त्वयोत्पाटिता सा सद्य एव। सलीम् ! प्रियतम ! न जाने, काद्य ते वार्ता इति? किमकरोत् ते चण्ड एष पिता ? धिङ् मां त्वामपि विपदि पातितवतीम् ! दयित, एषाहं श्वः प्रातर्नश्यामि । कथं मद्विरहितेन त्वया प्राणा धार्यन्ताम् ? क्वासि ? कारागृहे सीदन्तीमेनां कथं नाभ्यवपत्तुमागतोऽसि ? सलीम् !

(रभसात् सलीम् तां प्रति आधावति ।)

सलीम्—अनार्, धारयात्मानम् । त्वामेष सद्यो रक्षामि । आमाहि ।

(अनार् सशङ्कं तिष्ठति ।) त्वरस्व प्रिये! (इति तस्या हस्तमादाय) शृणु, सन्ति सुहृदो मे। अस्ति निर्गत्य पलायितुमुपायः। बहिरावाम् आवाह्य रक्षितुं सोत्कण्ठाः प्रतिपालयन्ति अश्वोत्तमाः। प्रभातात्पूर्वमेव प्रासादात्सुदूरं गतं स्यादावाभ्याम्।

अनार्—का वा प्रत्याशा? अलं साहसेन। कुत्र व्रजिष्यसि, कुत्र स्थास्यसि? नूनमनुसरिष्यन्ति राजसैनिकाः।

सलीम्—एषोऽहमनेन असिना तान् योत्स्ये। अलमेवमाशङ्क्य।

अनार्—हन्त! सलीम्, अलं साहसेन। अनिश्चितौ युद्धे जयपराजयौ। अपि च, कुतस्त्वं राजा भविष्यन् प्रजानां आशंसां व्यर्थयन् मम तुच्छायाः परिचारिण्याः कृते महान्तमात्मानमपि संशये क्षिपसि?

सलीम्—अनार्, न सहे, अलं क्षते क्षारं प्रक्षिप्य। मर्मणि प्रहरसि एतैर्वचोभिः। नष्टायां त्वयि किमर्थमस्तु अफलः कृतघ्नोऽयं मे शरीरपिण्डः?

अनार्—प्रिय, किं प्राप्स्याम्यहम् अनुम्रियमाणेन त्वया। अहो ते अतिकष्टो व्यवसायोऽयम्!

> एकातपत्रं जगतः प्रभुत्वं नवं वयः कान्तमिदं वपुश्च।
> अल्पस्य हेतोर्बहु मास्तु हातुं जीवन्नरो भद्रशतानि
> [पश्येत्॥ २॥

सलीम्—क्रूरे, अस्त्वनुमृतिः पश्चात्, अद्य सद्यो मां व्यापादयसि त्वम् ईदृशैरक्षरैः। (अनार् मूका तिष्ठति।) त्वामभ्युपपत्तुमागतस्य ममैवाद्य अभ्युपपत्तिः कार्या।

अनार्—(आश्वासयन्ती) प्रियतम, नैतादृशं प्रेम अन्ततः अकृतार्थं भविष्यति। तथाप्यलमतिचिन्तयित्वा मदीय-

मरणमन्तरेण। सत्यं यदि अच्छलमेतन्मे त्वयि हृदयप्रेम, किं नाम मरणमपि त्वत्तो मां विश्लेषयितुम्? सर्वथा त्वामेव भजामि पुनर्जन्मावपि।

सलीम्—(उपांशु) पुनर्जन्मनि! आम् अस्ति पुनर्जन्म, यथा हिन्दवः श्रद्दधति; ननु तथापि तत्र विश्वासः! (उच्चैः) अच्छलमावयोः प्रेमेति क एतदत्र निषेधति? अपि तु युवितच्छलमेतत्ते न सहे। अहमपि त्यक्ष्याम्येतत् महाराजपरतन्त्रं शरीरं, यथा लोकान्तरे वा जन्मान्तरे वा स्वच्छन्दतः, अनियन्त्रितम् आवां स्वर्गभोगान् निर्वेक्ष्यावः।

(प्रविश्य सरभसम्)

रहिम्—स्वामिन्, स्वामिन्, महाराज इत एव आगच्छति।

सलीम्—(सहसा) कथं महाराजः! अपि सत्यं स एव आगच्छति?

रहिम्—आं महाराज एव। तदेहि, पुनरपि महाराजापगमानन्तरम् अत्र आगमिष्यावः।

सलीम्—अनार्!

(इति झटिति ताम् उज्झित्वा बहिर्गतः। निष्क्रान्तौ रहिम् सलीम् च।)

अनार्—(किञ्चिज्जोषं स्थित्वा, सभयकम्पम्) कथं महाराजम् उल्लोकयितुं सहे? अहो पलायनाय निर्बध्नाति प्रिये कथं न मया सद्य एव तेन सह गतम्? धिङ् माम्! अद्य सर्वथा नास्त्येव आसीदति महाराजे आत्मरक्षोपायः। एतावान् कालः अज्ञानात् तर्कैः विक्षिप्तः। (यदृच्छया हस्ते स्फुरदङ्गुलीयकं

दृष्ट्वा किंचिदिव ध्यायन्ती) मातः, न पश्यसि दुर्जात-दुहितृभाग्यपरिणामम् । जननि ! (इत्यङ्गुलीयकमुद्घाट्य अन्तर्वर्ति चूर्णं दृष्ट्वा निध्यायन्ती) सलीम्, एषा गच्छामि अल्पभागा । भाविन्यपि जन्मनि मयि दयापरो भवतु विधिः । सलीम्, प्रियतम, आमन्त्रये त्वां भूयोऽपि संगमाय । महाराज ! मृते मयि मा पश्चात्तापेन अतितरां धर्मनिष्ठुरं हृदयं भवतो दूयताम् !

(इति अङ्गुलीयकान्तःस्थविषचूर्णम् आस्ये प्रक्षेप्तुमुद्युङ्क्ते । महाराजस्सहसा आगत्य प्रसारितखड्गाग्रेण तदङ्गुलीयकमाविध्य पातयति ।)

॥ इति नवमोऽङ्कः ॥

## ॥ अथ दशमोऽङ्कः ॥

(युवराजप्रासादः - सलीम् रहिम् च ।)

सलीम्—रहिम् ! अपि सत्यं महाराज एव कारागृहमभ्यागच्छन् त्वया दृष्टः ?

रहिम्—सत्यं युवराज, सत्यम् ।

सलीम्—किं कार्यमस्य कारागृहे ? निशीथिन्यां किमर्थम् एष निशाचरश्चरति ?

रहिम्—कुमार, एषोऽस्य कार्यविक्षणप्रकारः ! या निशा सर्वभूतानां तस्यां जागर्ति अयं महाराजबिडालः । उलूकोऽयं तत्र तत्र निशि परीक्षणाय संचरन् झटिति विस्मापयति भाययति च ।

सलीम्—भवतु, अहमेनं विस्मापयामि भाययामि च श्वः प्रातः । रहिम् ! अपि गतस्स्यादेष कारागृहात् ?

रहिम्—(चिन्तयन्) न मन्ये । अतिव्याकुल इव युवराजः, तत् किंचिन्मधुनिषेवणेन प्रत्यवस्थापयतु भवानात्मानम् ।

सलीम्—भवतु ।

रहिम्—(निर्गच्छन् समधु आगत्य आत्मगतम्) एष पुनरपि अनार्कलीत्राणाय कारागृहं गन्तुं प्रतिक्षणं मां पीडयिष्यति । तदस्मै अस्मिन् मधुनि निद्राचूर्णं प्रक्षिप्य प्रयच्छामि यदेतेन प्रातश्चिरादपि न प्रबुद्ध्यमानः कल्य एव कृतम् अनार्कलीवधं प्रति नात्मानं तावदायासयिष्यति ।

(तथा कृत्वा मधु युवराजाय प्रयच्छति । युवराजः पिबति ।)

सलीम्—रहिम्, कारागृहं प्रति नय माम्।

रहिम्—महाराजस्तत्रैव अद्यापि भवेत्।

सलीम्—अहो! अनेन यामिकेन भवितव्यं, न भारतस्य चक्रवर्त्तिना। रहिम्, गच्छ त्वं, पर्यवेक्षस्व, यदि राजा नाद्यापि अपयात इति।

रहिम्—यदाज्ञापयति युवराजः।

(इति निष्क्रान्तः।)

सलीम्—(परिक्रम्य) धिगेनं वृद्धजम्बुकं महीपतिस्थानमारूढम्! अहो, कथमेते वयं अप्राप्त-आत्माभिलाषपूर्तयो नश्यामो, नियन्त्रिता विरसैः क्लैब्यनान्तरीयकधर्मालापमुखरैः जरठैः। उद्भिन्नमदधाराः परिधावनदुर्ललितगात्राः गन्धहस्तिन इमे हस्तिपकपैशुन्येन अङ्कुशैः शृङ्खलाबन्धैश्च मर्मघट्टकैस्सीदामः। तातपाश! महाराजहतक! न अत्र देहलीसिंहासने चिराय कोऽपि उपविवेश। निर्घृणनृपाल! अद्य भविष्याम्येव चक्रवर्त्ती। तत्रैव कारागृहादद्य अवहिर्यातं त्वां करिष्यामि। (चिन्तयन्) अहो! रसिकोऽयम् आत्मानं मनुते, कलासु पक्षपातिनम्। कथं काष्ठप्रायं वहति हृदयं, यदेतादृशीं कलावतीमपि व्यापादयति। धर्मिष्ठंमन्योऽयं कथम् अनुक्रोशलवेनापि वियुक्तः? कदाचिदेवमेकां पर्यन्तकाष्ठां गतानां चित्तं, हठादन्यां विपरीतां काष्ठां गच्छति। अत एव मध्यमो मार्गः श्रेयान्। (निःश्वस्य) अनार्, विधिर्बद्धवैर इवावयोः कथं प्रतिपदं विहन्ति? अहो, कथम् एतस्मिन् विषमे प्रपञ्चे नास्ति अर्हतोरपि योगः? प्रिये, प्रिये! अद्य विरमति रात्रिः। हाः, कथं त्वां प्रातः व्यापाद्यमानां नृपश्वापदेन चिन्तयितुमप्युत्सहे? अनार्, अनार्!

(इति मूर्च्छितः शय्यायां लीयते ।)

(नेपथ्ये तन्त्रीवाद्यध्वनिः, तदनन्तरं गीतिः ।)

इह विविधकष्टविहतोऽ-
प्यान्तरशय्याशयान एवायम् ।
मुहुरनुरागो बुद्धो
बहुधात्मानं स साधयत्येव ॥ १ ॥

(शनैरुद्बुद्ध्य, गीतिं शृण्वन्)

सलीम्—अहो गीतस्य माधुर्यम्! संराज्ञी हि अस्य शक्तिः।

साहित्यादपि गीतं चेतः सद्यस्तरं स्पृशति ।
मुग्धानामपि साक्षाद् गान्धर्वे स्पन्दते गात्रम् ॥ २ ॥

श्लथयति दृढदुःखग्रन्थिबन्धान्, प्रमार्ष्टि
श्रममखिलम्, उदारं स्पन्दमन्तस्तनोति ।
तरलयति, तनोति स्तम्भसन्दिग्धमुग्धो-
त्सुकविलयमपीदं चेतसो निष्प्रपञ्चम् ॥ ३ ॥

अनार्कल्याः सान्निध्येऽपि एतादृश्येव सौहीद्-संवित्तिः संपद्यते। हन्त, स्मृतम्! क्व स रहीम् गतः? अपि जीवति अनार्कली, अथवा महाराज......

(इत्यर्धोक्त एवागत्य पुण्डरीकविट्ठलः)

पु. वि.—महाराज आदिशति...

सलीम्—को महाराजः?

पु. वि.—ननु भवतः पिता ।

सलीम्—भवच्छिष्याघातकः!

पु. वि.—कुमार! अलमावेगेन । जीवत्यनार्कली ।

सलीम्—जीवति! हन्त, नूनं जीवामि ।

पु. वि.—न केवलं जीवसि, किन्तु जयसि ।

सलीम्—किमिदमद्भुतं निगूह्य उच्यते? विवृत्य निवेद्यताम् । अनार्कलीवार्ताश्रवणरभसमिदं मे चेतः । गीतवत् सर्व एवालापः विलम्बकाल एव प्रस्तूयते भवता ।

पु. वि.—महाराजेन मरणाज्ञा प्रत्याम्नाता ।

सलीम्—मन्ये भवता तत्र किमपि कृतम् । जितं गान्धर्वेण ।

पु. वि.—कुमार! न मया, न च गान्धर्वेण ।

सलीम्—अथ केन?

पु. वि.—येयं महाराजस्य हिन्दुस्नुषा देवतेव प्रकाशते आवरोधे प्रतिदिनोपासिका भगवतो अग्नेः सवितुश्च, यस्याश्च महाराजतोऽप्यधिकं प्रेम अनार्कल्यां, सा महाराजस्य आज्ञां श्रुत्वा तदाज्ञाप्रत्याम्नायं प्रार्थयत । प्रसेदुषा मनसा महाराजेन कारागृहं प्रति स्वयमेव द्रुतं गतम्, सा च अनार्कली तदा अङ्गुलीयकान्तःस्थितविषचूर्णभक्षणोन्मुखी आसीत्, महाराजेन सद्यो निरुध्य संरक्षिता ।

(इति वदत्येव प्रविशति सख्या सह विवाहनेपथ्यालङ्कृता अनार्कली ।)

सखी—युवराज, गृहाण प्रसादमेतं भट्टिन्या प्रेषितम् । अद्य भवतो जन्मनक्षत्रमिति कृत्वा पारितोषिकमिदं तया वितीर्णम् । रोचते वा इदं पारितोषिकमिति पश्चात् स्वयमेव सन्देशं भट्टिन्यै प्रेषयतु कुमारः ।

सलीम्—सत्यमाह विद्वान् विट्ठलः सा अन्तःपुरालये प्रकाशमाना देवता इति ।

पतिव्रतायाः सौजन्यं तथा वीर्यवदेधते ।
यथा वज्रकठोरेण नृपेण कुसुमायितम् ॥ ४ ॥

पु. वि.—यथा हि संपुष्पिताया लताया दूराद्गन्धो याति, कुहचन गूढं निहितायाः स्वल्पाया अपि कस्तूरिकाया आमोदो व्योम व्याप्नोति, तथा हि कस्यापि सौजन्यं मृदु अपि सारवद् विश्वमेधजं भवति ।

(ततः प्रविशति तानसेनः ।)

तानसेनः—कुमार! सर्वं परिणामरमणीयं संपन्नम् । महाराजश्च त्वां द्रष्टुमायाति ।

(ततः प्रविशति अकबरः ।)

अकबरः—वत्स! किं ते भूयः प्रियमुपहरामि?

सलीम्—परमेष्ठिनि त्वयि प्रसन्ने किमन्यद् आशास्यम्?

अकबरः—तथापि इदमस्तु भरतवाक्यम्—

(तानसेनो गायति)

वाणीभावुकयोरिवास्तु सहृदोर्योगः शुभः प्रेयसोः
सौराज्येन मिथो विना मतभिदा जीयादिदं भारतम् ।
मध्येजन्ममृतीह कन्दुकसमं व्याहन्यमानानिमान्
अस्मान् मोचयताद् रमापुरपतिः त्यागप्रतिष्ठः शिवः ॥ ५ ॥

॥ निष्क्रान्ताः सर्वे ॥

॥ इति दशमोऽङ्कः ॥

॥ समाप्तम् अनार्कली नाम प्रकरणम्
कविकोकिल-सकलकलाकलाप-विद्वत्कवीन्द्र-श्रीराघवार्येण प्रणीतम् ॥

(संस्कृतरङ्ग-मङ्गलम्)

जीयाद् भारतभूः श्रिया, विजयतां मद्रप्रदेशोऽप्यसौ
जीयात्संस्कृतरङ्ग एष, जयतात् श्रीराघवोऽस्मद्गुरुः ।
आवात्स्यायनतन्त्रमा श्रुतिशिरः सर्वंकषा साहिती
बिभ्राणाऽमरभारती नवनवोन्मेषैः समुज्जृम्भताम् ॥

---

## देहल्यां विश्वसंस्कृत-संमेलने कृते अनार्कली-प्रयोगे उपयुक्ता प्रस्तावना

सूत्रधारः—(पुष्पाञ्जलिं विकीर्य)

एषोऽस्मि कार्यान्तरे रूपकप्रयोगे सूत्रधारः संवृत्तः। कोऽत्र शिष्याणाम्?

(दिशोऽवलोक्य)

नास्ति कोऽपि। शिष्यशब्दार्थ एवाद्य क्वापि नास्ति!

(प्रविशति शिष्यः।)

आः, अस्ति कोऽपि! (तस्य विचित्रं मुहम्मदीयं वेषं दृष्ट्वा) किमतीयोऽसौ? अथवा 'अमतम्' एवालम्बमाना 'हिप्पी' इति येऽद्य नूतनपरिव्राजका भ्रमन्ति, तेष्वन्यतमः किम्?

शिष्यः—आचार्य! वन्दे। भवच्छिष्य एवास्मि। किं प्रस्तुतमाचार्यैः? सदा किमपि किमपि नूतनं प्रस्तुवन्त एवाचार्याः! 'गुणानामेव दौरात्म्याद् धुरि धुर्यो नियुज्यते।'

सूत्र०—अलं मुखस्तुत्या। न वयं स्तुत्या निन्दया वा रज्यामहे विरज्यामहे वा। यत्कार्यं तत्कुर्महे, दुर्भरमपि कुर्मह एव।

शिष्यः—तत् कस्मिन् कार्यभारे भवतां शिष्यत्वमद्य समर्थनीयमस्माभिः?

सूत्र०—ननु संस्कृतरूपकप्रोज्जीवनायास्माभिर्मद्रनगरे स्थापितः संस्कृतरङ्गः।

शिष्यः—आम्, भास-कालिदास-भवभूति-विशाखदत्त-महेन्द्रवर्मादिप्रयोगैश्च येन कापि कीर्तिः सम्पादिता।

सूत्र०—किमुच्यते कीर्तिस्सम्पादितेति ? ननु अस्मिन्नवसरे खलु कीर्तिः संपाद्या, यदत्र भारतसाम्राज्यशिक्षामन्त्रालयेन सङ्घटिते विश्वसंस्कृतसम्मेळने नानादिग्भ्यो भारतीया विदेशीयाश्च संस्कृतरसिकाः समागताः ।

शिष्यः—नूनमनर्घोऽयमवसरः । समयस्यास्य समुचितमेव रूपकं किमपि चिन्तितमस्मदाचार्यैः? इमे कुतूहलिनः सर्वे सज्जाः स्मः ।

सूत्र०—वत्स, पश्य ! संस्कृतं न केवलमतिप्राचीना भाषा, किन्तु संप्रत्यपि सजीवा नवनिर्माणकार्योपयुक्ता इति निरूपयितुं नूतनं रूपकं किमपि प्रयोक्ष्यामहे ।

शिष्यः—साधु व्यवसितमाचार्यैः ।

सूत्र०—न केवलं तदेव । वस्तु च विचितमितः पूर्वं संस्कृतभाषया न व्यवहृतम् ।

शिष्यः—कथं नाम ?

सूत्र०—मोगल्साम्राज्ये अकबरसार्वभौमं तत्पुत्रं सलीम-नामकं चाधिकृत्य कृतमिदम् ।

शिष्यः—सत्यमपूर्वमेव किमपि आश्चर्यावहं भविष्यतीति मन्ये ।

सूत्र०—योऽद्य भारतेऽन्यत्र लोके च अतीव अपेक्षितः समन्वययोगः, नानामतानां नानाजनसमुदायानां च मिथः सामरस्यरूपः, स एव एतद्रूपकद्वारा आघोष्यते । अत्र न केवलं अकबर-महाराजेन 'दीन्-इलाहि'सभायां सर्वमतानां सामरस्यं मार्गितं, एवं साहित्ये संस्कृत-पारसीकसमन्वयः, तथा सङ्गीते नाट्ये च उत्तर-दाक्षिणात्य-संप्रदाययोस्समन्वयः, ..राजकुमारस्य परिचारिण्या विवाहेन उच्चनीचजनसमन्वयश्चेति सर्वतोमुखं किमपि रूपकेऽस्मिन् सामरस्यमासूत्रितम् ।

शिष्यः—श्रुतं मया भवद्भिरेव अनार्कलीति प्रसिद्धा कथा रूपकीकृतेति। मन्ये वर्णनेनानेन च तदेव रूपकम् अद्य प्रयोक्ष्यत इति।

(नेपथ्ये 'पीयो हेयः' इति श्रूयते)

शिष्यः—(सावेगम्) आचार्य! कोऽपि नीचः सुन्नी मामेव निन्दति, तमासादयामि शिक्षितुम्।

सूत्र०—हन्त, प्रवृत्तमेव रूपकम्। अहमपि यवनिकान्तर्भूत्वा तत्र तत्र प्रयोगक्रमेऽवहितो भविष्यामि।

# पात्राणि

(यथाप्रवेशम्)

सूत्रधारः

संस्कृतरङ्गकार्यदर्शी

कश्चित् षीया

,, सुन्नी

हिन्दुसन्न्यासी (तद्वेषः अकबरः)

हिन्दुगृहस्थः (बीरवरः, बीर्बल्)

राजपुरुषः

अकबरः (सार्वभौमः)

अबुल् फ़ैसल् (मन्त्री)

(अबुल् फ़ैसी (फ़ैसल्-भ्राता), मुल्ला दूपियासा अबुल् हसन्, हकीम् हुमान् (वैद्यप्रमुखः) -आस्थानस्थाः)

सच्चिदानन्दाश्रमः (नृसिंहाश्रमशिष्यः, अद्वैताचार्यः)

विट्ठलनाथगोस्वामिनः (वल्लभीय आचार्यः)

भानुचन्द्रगणी (जैनगुरुः)

मुसल्मानाः (आस्थानस्थिताः)

सलीम्-राजकुमारः (जहाङ्गीर्)

दस्तूर् महर्जि राणा (इरानीयाचार्यः)

पाद्रे रोडाल्फ़ो अक्वाविवा (क्रैस्तवगुरुः गोवाप्रदेशस्थः)

यूथ-राबी (ज्यू)

अब्दुर् रहीम् खानखानः (विशेषेण आदृत आस्थानिकः; भक्तः, कविः)

अब्दुल् कादिर् बदौनी (आस्थान-इमाम्, पण्डितः, 'तारीख्-

शिष्यः—श्रुतं मया भवद्भिरेव अनार्कलीति प्रसिद्धा कथा रूपकीकृतेति। मन्ये वर्णनेनानेन च तदेव रूपकम् अद्य प्रयोक्ष्यत इति।

(नेपथ्ये 'पीयो हेयः' इति श्रूयते)

शिष्यः—(सावेगम्) आचार्य! कोऽपि नीचः सुन्नी मामेव निन्दति, तमासादयामि शिक्षितुम्।

सूत्र०—हन्त, प्रवृत्तमेव रूपकम्। अहमपि यवनिकान्तर्भूत्वा तत्र तत्र प्रयोगक्रमेऽवहितो भविष्यामि।

इ-बदौनी ' इति ख्यातस्य इस्लामीयचरित्रग्रन्थस्य कर्ता च)
अब्दुन् नबिः (सद्-इ-सुदूर, सुन्नी-अध्यक्षः)
अब्दुल्ला सुल्तान्पुरी (मख्दूमुल्मुल्क् - सुन्नीनेता, व्यवहाराधिकृतश्च)
मुल्ला मुहम्मद् मस्ऊडी (जौन्पूर्-वासी ; षीयाप्रमुख.)
काणः (वेषच्छन्नो बीरबरः)
राजा तोडरमल्लः (मन्त्री)
मुल्लापेरी (हरिवंशादिग्रन्थानां पारसीकानुवादकर्ता)
विहारि कृष्णदासः (संस्कृतपण्डित.)
महेशठक्कुरः ( ,, )
तानसेनः (गायकसार्वभौमः)
पुण्डरीकविट्ठलः (कर्णाटसंगीताचार्यः)
मानसिंहः (जयपुर-राजपुत्रः, सलीमस्य स्यालः)

अन्तःपुरपरिचारिणीवर्गः
नादिरा-अनार्कली (अन्त पुरपरिचारिणी, नर्तनकुशला)

अधिकारी
रहिम्खान् (सलीमस्य वल्लभः)
इस्मद्बीगम् (मिहिरुन्निस्सा-माता)
सखी